समाधिं पारयित्वेन्द्रं भगवानूचिवानिति । नापेक्षां चक्रिरेऽर्हन्तः परसाहायिकं क्वचित् ॥ २९ ॥
नैतद्भूतं भवति वा भविष्यति च जातुचित् । यदर्हन्तोऽन्यसाहाय्यादर्जयन्ति हि केवलम् ॥ ३० ॥
केवलं केवलज्ञानं प्राप्नुवन्ति स्ववीर्यतः । स्ववीर्येणैव गच्छन्ति जिनेन्द्राः परमं पदम् ॥ ३१ ॥
बालेन तपसोत्पन्नं व्यन्तरेषु तदामरम् । नाथस्य [1]मातृष्वस्रीयं सिद्धार्थं [2]मघवादिशत् ॥ ३२ ॥
विदधात्युपसर्गं यः स्वामिनो मारणात्मकम् । प्रतिषेध्यः स भवता स्वामिनः पार्श्ववर्तिना ॥ ३३ ॥
इत्युक्त्वागाद्धरिस्तस्थौ सिद्धार्थः प्रतिपद्य तत् । स्वामी षष्ठपारणाय कोल्लाकेऽगान्निवेशने ॥ ३४ ॥
तत्र द्विजातेर्बहुलाभिधस्य सदने प्रभुः । चक्रे [3]सितादिमिश्रेण परमान्नेन पारणम् ॥ ३५ ॥
वसुधाराप्रभृतीनि द्विजातेस्तस्य सद्मनि । पञ्चदिव्यान्याविरासन् कृतानि [4]दिविषद्गणैः ॥ ३६ ॥
ततो जगद्गुरुः शीतलेश्यः [5]शीतमयूखवत् । तपस्तेजोदुरालोकोऽ[6]धिपतिस्तेजसामिव ॥ ३७ ॥
शौण्डीर्यवान् गज इव सुमेरुरिव निश्चलः । [7]सर्वस्पर्शसहिष्णुश्च यथैव हि वसुन्धरा ॥ ३८ ॥
[8]अंभोधिरिव गंभीरो मृगेन्द्र इव निर्भयः । मिथ्यादृशां दुरालोकः सुहुतो [9]हव्यवाडिव ॥ ३९ ॥
[10]खड्गिशृंगमिवैकाकी [11]जातस्थामा महोक्षवत् । गुप्तेन्द्रियः कूर्म इवाहि[12]रिवैकान्तादत्तदृक् ॥ ४० ॥
[13]निरञ्जनः शंख इव जातरूपः सुवर्णवत् । विप्रमुक्तः [14]खगे इव जीव इवास्खलद्गतिः ॥ ४१ ॥
भारुंड इवाप्रमत्तो व्योमेव च निराश्रयः । अंभोजिनीदलमिवोपलेपपरिवर्जितः ॥ ४२ ॥

१ मातुः स्वसुः पुत्रम् । २ इन्द्रः । ३ शर्करादिमिश्रेण । ४ देवसमूहैः । ५ चन्द्रवत् । ६ तेजसामधिपतिः सूर्यः । ७ सर्वेषां स्पर्शं सहत इतिशीलः । ८ समुद्रः । ९ अग्निः । १० खड्गी श्वापदविशेषः गेडो इति लोके । ११ जाततेजाः । १२ सर्पः । १३ निर्मलः । १४ पक्षी

# । त्रिषष्टिशलाकापुरुषचरितम् ॥

## ॥ दशमं पर्व ॥

## श्रीमहावीरचरितम् ॥

### ॥ प्रथमः सर्गः ॥



नमो दुर्वाररागादिवैरिवारनिवारिणे । अर्हते योगिनाथाय महावीराय तायिने ॥ १ ॥
अथास्य देवदेवस्य देवासुरनरार्चितम् । चरितं कीर्तयिष्यामः पुण्यवारिसरोवरम् ॥ २ ॥
अस्यैव जंबूद्वीपस्य प्रत्यग्विदेहभूषणे । विजयेऽस्ति महावप्रे जयन्ती नामतः पुरी ॥ ३ ॥
दोर्वीर्येण समुत्पन्न इव नव्यो जनार्दनः । महासमृद्धिस्तत्रासीन्नृपतिः शत्रुमर्दनः ॥ ४ ॥
तस्य ग्रामे तु पृथिवीप्रतिष्ठानाभिधेऽभवत् । स्वामिभक्तो नयसाराभिधानो ग्रामचिन्तकः ॥ ५ ॥
साधुसम्बन्धबाह्योऽपि सोऽकृत्येभ्यः पराङ्मुखः । दोषान्वेषणविमुखो गुणग्रहणतत्परः ॥ ६ ॥
सोऽन्यदा वरदारुभ्यः पृथिवीपतिशासनात् । सपाथेयो महाटव्यामादाय शकटानगात् ॥ ७ ॥
तस्य छेदयतो वृक्षान्मध्यन्दिनमुपाययौ । जठरेऽग्निरिव व्योम्नि दिदीपे तपनोऽधिकम् ॥ ८ ॥
भृतकैर्नयसारस्य सारा रसवती तदा । समयज्ञैरुपनिन्ये महापादपतरोरधः ॥ ९ ॥

---

१ दुर्वारा ये रागादयस्त एव शत्रवस्तेषां वारस्य समूहस्य निवारिणे निवारकाय । २ रक्षित्रे। ३ दुष्कृत्येभ्यः।४ मर्त्यः।५ भृत्यैः। ६ महापमहावृक्षस्य।

ममापि पुरतोऽत्रास्ति सर्वज्ञ इति कोऽपि किम् । पञ्चाननस्य न ह्यग्रे भवत्यन्यः पराक्रमी ॥ ६८ ॥
मानुषा यद्यमी मूर्खा यान्त्येनं यान्तु तन्ननु । देवाः कथममी यान्ति दंभः कोऽप्यस्य तन्महान् ॥ ६९ ॥
यादृशो वैष सर्वज्ञो देवा अपि हि तादृशाः । यदि वा यादृशो यक्षो जायते तादृशो बलिः ॥ ७० ॥
अस्य सर्वज्ञतादर्पमसावपहराम्यहम् । देवानां मानवानां च पश्यतामेव संप्रति ॥ ७१ ॥
सोऽहंकारादुदीर्यैवं शिष्यपंचशतीवृतः । ययौ समवसरणे वीरं सुरनरावृतम् ॥ ७२ ॥
तत्रर्द्धिं स्वामिनः प्रेक्ष्य रूपं तेजश्च तादृशम् । किमेतदिति साश्चर्यं इन्द्रभूतिरवास्थित ॥ ७३ ॥
भो गौतमेन्द्रभूते किं तव स्वागतमित्यथ । सुधा मधुरया वाचा तं बभाषे जगद्गुरुः ॥ ७४ ॥
गौतमोऽचिन्तयन्मेऽसौ गोत्रं नाम च वेत्ति किम् । जगत्प्रसिद्धमथवा को जानाति न मामिह ॥ ७५ ॥
संशयं हृदयस्थं मे भाषते च छिनत्ति च । यद्यसौ ज्ञानसंपत्त्या तदाश्चर्यकरः खलु ॥ ७६ ॥
इत्यन्तः संशयधरं तमूचे परमेश्वरः । अस्ति जीवो न वेत्युच्चैर्विद्यते तव संशयः ॥ ७७ ॥
अस्त्येव जीवः स पुनर्ज्ञेयो गौतम लक्षणैः । चित्तचैतन्यविज्ञानसंज्ञा प्रभृतिभिः खलु ॥ ७८ ॥
न जीवोऽवस्थितश्चेत्स्याद्भाजनं पुण्यपापयोः । यागदानादिकं तर्हि किंनिमित्तं तवाप्यहो ॥ ७९ ॥
इति स्वामिवचः श्रुत्वा मिथ्यात्वेन सहैव सः । उज्झाञ्चकार सन्देहं स्वामिनं प्रणनाम च ॥ ८० ॥
ऊचे च त्वत्परीक्षार्थं दुर्बुद्धिरहमागमम् । उत्तुंगवृक्षमुद्युक्तः प्रमातुमिव वामनः ॥ ८१ ॥
बोधितोऽस्मि त्वया साधु दुष्टोऽप्येषोऽहमद्य तत् । भवाद्विरक्तं प्रव्रज्यादानेनानुगृहाण माम् ॥ ८२ ॥

१ सिंहस्य ।

क्षुधितस्तृषितो वापि यदि स्यादतिथिर्मम । तं भोजयामीति नयसारोऽपश्यदितस्ततः ॥ १० ॥
क्षुधितास्तृषिताः श्रान्ताः सार्थान्वेषणतत्पराः । घर्माम्भःप्लुतसर्वांगाः साधवश्चाययुस्तदा ॥ ११ ॥
साध्वमी साधवो मेऽत्रातिथयः समुपस्थिताः । चिन्तयन्निति नत्वा तान् सोऽब्रवीद्ग्रामचिन्तकः ॥ १२ ॥
भगवन्तो भवन्तोऽस्यामटव्यां कथमागताः । एकाकिनः शस्त्रिणोऽपि पर्यटन्ति न खल्विह ॥ १३ ॥
तेऽप्यभ्यधुर्वयं स्थानात् सार्थेन प्रस्थिताः पुरा । ग्रामे प्रविष्टा भिक्षायै ययौ सार्थस्तदैव हि ॥ १४ ॥
[1]अनात्तभिक्षाश्चलिताः सार्थस्यानुपदं वयम् । आगच्छन्तो महाटव्यामस्यां निपतितास्ततः ॥ १५ ॥
नयसारोऽब्रवीदेवमहो सार्थोऽतिनिष्कृपः । अहो पापादप्यभीरुरहो विश्वस्तघातकः ॥ १६ ॥
यत्सह प्रस्थितान् साधून् सार्थप्रत्याशया[2] स्थितान् । [3]अनागमय्य प्रययौ निजकार्यैकनिष्ठुरः ॥ १७ ॥
मत्पुण्यैर्यूयमायाता वनेऽत्रातिथयो मम । इत्युक्त्वा भोजनस्थानं स निन्ये तान्महामुनीन् ॥ १८ ॥
स्वार्थोपनीतैः पानान्नैः स मुनीन् प्रत्यलाभयत् । अन्यत्र गत्वा विधिना तेऽप्यभुञ्जन्त साधवः ॥ १९ ॥
ग्रामायुक्तोऽपि हि भुक्त्वा गत्वा नत्वावदन्मुनीन् । चलन्तु भगवन्तोऽद्य पूर्मार्गं दर्शयामि वः ॥ २० ॥
ते तेन सह चेलुश्च प्रापुश्च नगरीपथम् । तरोरधश्चोपविश्य धर्मं तस्याचचक्षिरे ॥ २१ ॥
स प्रत्यपादि सम्यक्त्वं धन्यंमन्यः[4] प्रणम्य तान् । वलित्वा दारूणि राज्ञे प्रैषीद्ग्रामे स्वयं त्वगात् ॥ २२ ॥
अभ्यस्यन् सदा धर्मं सप्ततत्त्वानि चिन्तयन् । सम्यक्त्वं पालयन् कालमनैषीत् स महामनाः ॥ २३ ॥
विहिताराधनः सोऽन्ते स्मृतपञ्चनमस्कृतिः । मृत्वा बभूव सौधर्मे सुरः पल्योपमस्थितिः ॥ २४ ॥

१ अनात्ताऽप्राप्ता भिक्षा येषां ते । २ सार्थविश्वासेन । ३ अप्रतीक्ष्य । ४ आत्मानं धन्य मन्यत इति ।

इतश्चात्रैव भरते विनीतेत्यस्ति पूर्वरा । पुरा युगादिनाथस्य कृते सुरवरैः कृता ॥ २५ ॥
तत्र श्रीऋषभस्वामिसूनुर्नवनिधीश्वरः । चतुर्दशरत्नपतिर्भरतश्चक्रवर्त्यभूत् ॥ २६ ॥
ग्रामचिन्तकजीवः स च्युत्वाभूत्तस्य नन्दनः । मरीचीन् विकिरंस्तेन मरीचिरिति विश्रुतः ॥ २७ ॥
आद्ये समवसरणे ऋषभस्वामिनः प्रभोः । पितृभ्रात्रादिभिः सार्धं मरीचिः क्षत्रियो ययौ ॥ २८ ॥
महिमानं प्रभोः प्रेक्ष्य क्रियमाणं स नाकिभिः । धर्मं चाकर्ण्य सम्यक्त्वलब्धधीर्व्रतमाददे ॥ २९ ॥
सम्यग्ज्ञातयतिधर्मः स्वशरीरेऽपि निःस्पृहः । त्रिगुप्तिः पञ्चसमितिर्निष्कषायो महाव्रती ॥ ३० ॥
स्थविराणां पुरोऽङ्गानि पठन्नेकादशापि हि । ऋषभस्वामिना सार्धं मरीचिर्व्यहरच्चिरम् ॥ ३१ ॥
॥ युग्मम् ॥
सोऽपरेद्युर्ग्रीष्मऋतावुष्णांशुकरदारुणे । प्रतिमार्गं पान्थपादनखंपचरजश्चये ॥ ३२ ॥
स्वेदार्द्रीभूतसर्वाङ्गमलक्लिन्नांशुकद्वयः । तृष्णार्तोऽचिन्तयदिति चारित्रावरणोदयात् ॥ ३३ ॥
॥ युग्मम् ॥
न श्रामण्यगुणान्मेरुसमभारान् दुरुद्वहान् । निर्गुणोऽहं भवाकांक्षी वोढुं प्रभुरतः परम् ॥ ३४ ॥
किं त्यजामि व्रतं लोके तत्त्यागे लज्ज्यते खलु । लब्धो वायं मयोपायो व्रतं येन क्लमो न च ॥ ३५ ॥
श्रमणा भगवन्तोऽमी त्रिदंडविरताः सदा । अस्तु दंडैर्निर्जितस्य त्रिदंडी मम लांछनम् ॥ ३६ ॥

---

१ किरणान् । २ देवैः । ३ सूर्यकिरणैर्दारुणे । ४ पांथचरणानां नखानि पचति, एतादृशोरजसां धूलीना समूहो यस्मिंस्तस्मिन् । ५ मया लज्ज्यत इत्यर्थः । ६ येनोपायेन व्रतं भवेदिति शेषः क्लमश्च न भवेदित्यर्थः । ७ मनोदंड कायदंड वचनदंड रहिताः ।



केशलोचादमी मुंडाः क्षुरमुंडः शिखी[1] त्वहम् । महाव्रतधराश्चामी स्यामणुव्रतभृत्त्वहम् ॥ ३७ ॥
निष्किंचना[2] मुनयोऽमी भूयान्मे मुद्रिकादि तु । अमी विमोहा मोहेन छन्नस्य छत्रमस्तु मे ॥ ३८ ॥
उपानद्रहिताश्चामी सञ्चरन्ति महर्षयः । पादत्राणनिमित्तं मे भवतात्युपानहौ ॥ ३९ ॥
सुगन्धयोऽमी शीलेन दुर्गन्धः शीलतस्त्वहम् । सौगन्ध्यहेतोर्भवतु श्रीखंडतिलकादि मे ॥ ४० ॥
अमी शुक्लजरद्वस्त्रा निष्कषाया[3] महर्षयः । भवन्तु मे तु वासांसि काषायाणि[4] कषायिणः[5] ॥ ४१ ॥
त्यजन्त्यमी जलारंभं बहुजीवोपमर्दकम् । स्नानं पानं च पयसा मितेन[6] भवताच्च मे ॥ ४२ ॥
एवं विकल्प्य स्वधिया लिंगनिर्वाहहेतवे । पारिव्राज्यं प्रत्यपादि मरीचिः क्लेशकातरः ॥ ४३ ॥
तादृग्वेषं च तं दृष्ट्वापृच्छद्धर्मं जनोऽखिलः । साधुधर्मं समाचख्यौ सोऽपि तेषां जिनोदितम् ॥ ४४ ॥
किं त्वं स्वयं नाचरसीत्यनुयुक्तः पुनर्जनैः । मेरुभारं न तं वोढुमीशोऽस्मीति शशंस सः ॥ ४५ ॥
धर्माख्यानप्रतिबुद्धान् स तु भव्यानुपस्थितान् । शिष्यान् समर्पयामास स्वामिने नाभिसूनवे ॥ ४६ ॥
इत्याचारो[7] विजहार मरीचिः स्वामिना सह । स्वामी च समवासार्षीद्विनीतायां पुनः पुरि ॥ ४७ ॥
तत्र प्रभुर्नमस्कृत्य पृष्टो भरतचक्रिणा । भाविनोऽर्हच्चक्रिविष्णुप्रतिविष्णुबलाञ्जगौ ॥ ४८ ॥
पुनः पप्रच्छ भरतः किं कश्चिदिह पर्षदि । भाव्यत्र भरतक्षेत्रे नाथ त्वमिव तीर्थकृत् ॥ ४९ ॥
मरीचिं दर्शयन्नाख्यत् स्वामी सूनुरयं तव । पश्चिमस्तीर्थकृद्वीरो[8] नाम्ना भावीह भारते ॥ ५० ॥

१ शिखावान् । २ निष्परिग्रहाः । ३ क्रोधादिकषायरहिताः । ४ कषायो वर्णविशेषस्तेन रक्तानि वस्त्राणि काषायाणि । ५ क्रोधादि-कषायवतो मम । ६ परिमितेन जलेन । ७ इत्युक्तप्रकार आचारो यस्य सः । ८ चरमः ।

भाव्याद्योऽत्र त्रिपृष्ठाख्यः शार्ङ्गभृत्पोतने पुरे । मूकापुर्यां विदेहेषु प्रियमित्रश्च चक्रभृत् ॥ ५१ ॥
तच्छ्रुत्वा नाथमापृच्छ्य मरीचिं भरतो ययौ । त्रिश्च प्रदक्षिणीकृत्य वन्दित्वैवमवोचत ॥ ५२ ॥
स्वामिनोक्तं चरमस्त्वं भाव्यर्हन्निह भारते । आदिश्च वासुदेवस्त्वं त्रिपृष्टः पोतनेश्वरः ॥ ५३ ॥
चक्री विदेहमूकायां प्रियमित्रोऽभिधानतः । पारिव्राज्यं न ते वन्द्यं भाव्यर्हन्निति वन्द्यसे ॥ ५४ ॥
तमित्युक्त्वा चक्रवर्ती प्रणम्य स्वामिनं पुनः । विनीतात्मा प्रविवेश विनीतां मुदितः पुरीम् ॥ ५५ ॥
तदाकर्ण्य मरीचिस्त्रिरास्फोट्य त्रिपदीं मुदा । इत्युवाचोच्चकैर्विष्णुर्भविष्यामि यदादिमः ॥ ५६ ॥
मूकानगर्यां मे चक्रवर्तित्वं च भविष्यति । भाव्यहं चरमश्चार्हन् पर्याप्तमपरेण मे ॥ ५७ ॥
आद्योऽहं वासुदेवानां पिता मे चक्रवर्तिनाम् । पितामहस्तीर्थकृतामहो मे कुलमुत्तमम् ॥ ५८ ॥
एवं जातिमदं कुर्वन् भुजावास्फोटयन्मुहुः । नीचगोत्राभिधं कर्म मरीचिः समुपार्जयत् ॥ ५९ ॥
ऋषभस्वामिनिर्वाणादूर्ध्वं सार्धं स साधुभिः । विहरन् प्रबोध्य भव्यान् प्राहिणोत् साधुसन्निधौ ॥ ६० ॥
व्याधिभिश्चान्यदा ग्रस्तोऽसंयमीति स साधुभिः । अपाल्यमानो ग्लानः सन्मनस्येवं व्यचिन्तयत् ॥ ६१ ॥
अहो अमी साधवो धिङ्निर्दाक्षिण्याः[1] कृपोज्झिताः । स्वार्थमात्रोद्यता लोकव्यवहारपराङ्मुखाः ॥ ६२ ॥
यन्मां परिचितं स्निग्धमप्येकगुरुदीक्षितम् । विनीतमपि नेक्षन्ते दूरेऽस्तु मम पालनम् ॥ ६३ ॥
यद्वा दुश्चिन्तितं मेऽदो यदमी स्वतनोरपि[2] । परिचर्यां न कुर्वन्ति भ्रष्टस्य तु कथं मम ॥ ६४ ॥
अनेन व्याधिना मुक्तस्ततः[3] स्वस्य प्रतिचारकम्[4] । कञ्चिच्छिष्यं करिष्यामि स्वलिंगेनामुनैव हि ॥ ६५ ॥

१ सौजन्यरहिताः । २ स्वशरीरस्यापि । ३ तस्माद्धेतोः । ४ सेवकम् ।

एवं ध्यायन् विधिवशान्मरीचिरभवत् पटुः[1]। अन्यदा मिलितश्चास्य कपिलः कुलपुत्रकः ॥ ६६ ॥
धर्मार्थी ज्ञापितस्तेन कपिलो धर्ममार्हतम्। किं स्वयं न करोषीति सोऽपृच्छि कपिलेन च ॥ ६७ ॥
मरीचिरवदद्धर्मं नैनं कर्तुमहं क्षमः। कपिलोऽप्यब्रवीत् किं त्वन्मार्गे धर्मो न विद्यते ॥ ६८ ॥
जिनधर्मालसं ज्ञात्वा शिष्यमिच्छन् स तं जगौ। मार्गे जैनेऽपि धर्मोऽस्ति मम मार्गेऽपि विद्यते ॥ ६९ ॥
तच्छिष्यः कपिलोऽथाभून्मिथ्याधर्मोपदेशनात्। मरीचिरप्यब्धिकोटिकोटीसंसारमार्जयत् ॥ ७० ॥
मरीचिस्तदनालोच्य विहितानशनो मृतः। ब्रह्मलोके दशोदन्वत्[2]प्रमितायुः सुरोऽभवत् ॥ ७१ ॥
शिष्यान् विधायासूर्यादीन् स्वाचारानुपदिश्य च। विपद्य च ब्रह्मलोके कपिलोऽप्यमरोऽभवत् ॥ ७२ ॥
स प्राग्जन्मावधेर्ज्ञात्वा मोहादभ्येत्य भूतले। स्वयं कृतं सांख्यमतमासूर्यादीनबोधयत् ॥ ७३ ॥
तदाम्नायादत्र सांख्यं प्रावर्तत च दर्शनम्। सुखसाध्ये ह्यनुष्ठाने प्रायो लोकः प्रवर्तते ॥ ७४ ॥
च्युत्वा मरीचिजीवोऽपि कोल्लाके सन्निवेशने। कौशिकाख्यः पूर्वलक्षाशीत्यायुर्ब्राह्मणोऽभवत् ॥ ७५ ॥
स सदा विषयासक्तो द्रव्योपार्जनतत्परः। हिंसादिषु च निःशूकः[3] कालं भूयांसमत्यगात् ॥ ७६ ॥
सोऽन्ते त्रिदंडी भूत्वा च मृत्वा भ्रान्त्वा बहून् भवान्। स्थूणाख्ये सन्निवेशेऽभूत् पुष्पमित्राभिधो द्विजः ७७
भूत्वा त्रिदंडिकः पूर्वलक्षद्वासप्ततिप्रमम्। अतीत्यायुः स सौधर्मे सुरोऽभून्मध्यमस्थितिः ॥ ७८ ॥
च्युत्वा चैत्ये सन्निवेशेऽग्न्युद्योतः स द्विजोऽभवत्। पूर्वलक्षचतुःषष्ठ्यायुष्कः प्राग्वत्त्रिदंड्यभूत् ॥ ७९ ॥
मृत्वैशाने मध्यमायुः सोऽभूद्देवस्ततश्च्युतः। मन्दिरे सन्निवेशेऽभूदग्निभूतिरिति द्विजः ॥ ८० ॥

---

१ व्याधिरहितः। २ दशसागरोपमायुः। ३ निर्दयः।

षट्पञ्चाशत्पूर्वलक्षायुष्कः सोऽपि त्रिदंड्यभूत् । मृत्वा सनत्कुमारे च मध्यमायुः सुरोऽभवत् ॥ ८१ ॥
च्युत्वा च श्वेतंबीपुर्यां भारद्वाजोऽभवद्द्विजः । चतुश्चत्वारिंशत्पूर्वलक्षायुः स त्रिदंड्यभूत् ॥ ८२ ॥
मृत्वा माहेन्द्रकल्पेऽभूत् स सुरो मध्यमस्थितिः । च्युत्वा भ्रान्त्वा भवं राजगृहेऽभूत्स्थावरो द्विजः॥८३॥
चतुस्त्रिंशत्पूर्वलक्षायुष्कः सोऽपि त्रिदंड्यभूत् । विपद्य च ब्रह्मलोके मध्यमायुः सुरोऽभवत् ॥ ८४ ॥
ब्रह्मलोकात्परिच्युत्य स बभ्राम बहून् भवान् । भवो ह्यनन्तीभवति स्वकर्मपरिणामतः ॥ ८५ ॥
इतश्चाभूद्राजगृहे विश्वनन्दी महीपतिः । पत्न्यां प्रियंगौ विशाखनन्दी तस्याभवत्सुतः ॥ ८६ ॥
विशाखभूतियुवराड् राज्ञस्तस्यानुजोऽभवत् । युवराजस्य तस्याभूद्धारिणी नामतः प्रिया ॥ ८७ ॥
मरीचिजीवः प्राग्जन्मोपार्जितैः शुभकर्मभिः । विशाखभूतेर्धारिण्यां विश्वभूतिः सुतोऽभवत् ॥ ८८ ॥
उद्यौवनो विश्वभूतिर्वने पुष्पकरंडके । रेमे सान्तःपुरो देवकुमार इव नन्दने ॥ ८९ ॥
विशाखनन्दी क्रीडेच्छू राट्पुत्रोऽस्थात्तु तद्बहिः । पुष्पाद्यर्थं गता दास्यो ददृशुस्तौ तथास्थितौ ॥ ९० ॥
ताभ्यो ज्ञात्वा प्रियंगुस्तत् कोपाकः कुपिता ययौ । तदीप्सितार्थं राजापि यात्राभेरीमवादयत् ॥ ९१ ॥
उद्धृत्तः पुरुषसिंहः सामन्तस्तज्जयाय तत् । यास्यामीति सभामध्ये मायया चावदन्नृपः ॥ ९२ ॥
तच्च श्रुत्वा विश्वभूतिर्ऋजुरेत्य वनात्ततः । भक्त्या निवार्य राजानं प्रयाणमकरोत् स्वयम् ॥ ९३ ॥
गतश्च पुरुषसिंहं दृष्ट्वाज्ञावर्तिनं पुनः । ववले तत्र च ययौ वने पुष्पकरंडके ॥ ९४ ॥
विशाखनन्दी मध्येऽस्तीत्युक्तो द्वाःस्थेन तत्र सः । अचिन्तयन्माययाहं कृष्टः पुष्पकरंडकात् ॥ ९५ ॥

---

१ कोपगृहम् । २ उद्धतः ।

क्रुद्धः कपित्थं मुष्ट्याहंस्तत्फलैः पतितैर्भुवम् । छादितां दर्शयन् सोऽथ जगाद द्वारपालकम् ॥ ९६ ॥
पातयामि शिरांस्येवं सर्वेषां भवतां पुनः । ज्यायसी[1] ज्यायसि[2] ताते न चेद्भक्तिर्भवेन्मम ॥ ९७ ॥
भोगैरीदृग्वञ्चनाद्यैर्ममालमिति स ब्रुवन् । संभूतिमुनिपादान्ते गत्वा व्रतमुपाददे ॥ ९८ ॥
तं च प्रव्रजितं श्रुत्वा राजा सावरजो[3]ऽप्यगात् । नत्वा च क्षमयित्वा च राज्यायार्थयते स्म च ॥ ९९ ॥
विश्वभूतिमनिच्छन्तं ज्ञात्वा भूपोऽगमद्गृहम् । ततो व्यहार्षीदन्यत्र स पुनर्गुरुणा सह ॥ १०० ॥
स गुर्वनुज्ञयैकाकिविहारेण तपःकृशः । विहरन्नेकदागच्छन्नगरीं मथुराभिधाम् ॥ १०१ ॥
तदा विशाखनन्द्यागादुद्वोढुं तन्नृपात्मजाम् । विश्वभूतिश्च मासान्ते पारणायाविशत्पुरीम् ॥ १०२ ॥
विशाखनन्दिनः सोऽथ शिबिराभ्यर्णमागतः । विश्वभूतिः कुमारोऽसावित्यदर्श्यत पूरुषैः ॥ १०३ ॥
विशाखनन्दी तं सद्यः प्रेक्ष्य द्विषमिवाकुपत् । गवैकया विश्वभूतिः पर्यस्तश्च तदापतत् ॥ १०४ ॥
कपित्थपातनं स्थाम[4] क्व ते चेत्यहसच्च सः । धृत्वा गां शृंगयोर्विश्वभूतिश्चाभ्रमयत्क्रुधा ॥ १०५ ॥
भूयिष्ठवीर्यो भूयासं मृत्यवेऽस्य भवान्तरे । अनेन तपसोग्रेण निदानमिति सोऽकरोत् ॥ १०६ ॥
संपूर्य कोटिवर्षायुरनालोच्य च तन्मृतः । विश्वभूतिर्महाशुक्रे प्रकृष्टायुः सुरोऽभवत् ॥ १०७ ॥
इतश्चात्रैव भरते नगरे पोतनाभिधे । अभूद्रिपुप्रतिशत्रुर्नाम राजा महाभुजः ॥ १०८ ॥
तस्य भद्रेति पत्न्यासीत्तस्यां सूनुरजायत । चतुर्भिः सूचितः स्वप्नैर्बलभद्रोऽचलाभिधः ॥ १०९ ॥
मृगावतीति नाम्नाभूत् पुत्री च मृगलोचना । सोद्यौवना रूपवती प्रणन्तुं पितरं ययौ ॥ ११० ॥

१ महती भक्तिः । २ ज्येष्ठे पितरि । ३ अनुजेन सहितः । ४ बलम् ।

जातानुरागस्तां प्रेक्ष्य निजोत्संगे न्यधत्त सः । तत्पाणिग्रहणोपायं विचिन्त्य व्यसृजच्च ताम् ॥ १११ ॥
पौरवृद्धानथाहूय पप्रच्छेदं महीपतिः । यदत्र जायते रत्नं तत्कस्य ब्रूत निर्णयम् ॥ ११२ ॥
तवेति ते समाचख्युस्त्रिरुपादाय तद्वचः । मृगावतीं परिणेतुं तत्र चानाययन्नृपः ॥ ११३ ॥
जग्मुस्ते लज्जिताः सर्वे पार्थिवोऽपि मृगावतीम् । गान्धर्वेण विवाहेन स्वयमेव ह्युपायत ॥ ११४ ॥
लज्जाक्रोधाकुला भद्रा देवी मुक्त्वा महीपतिम् । सहाचलेन निर्गत्य प्रययौ दक्षिणापथे ॥ ११५ ॥
पुरीं माहेश्वरीं तत्र विरचय्याचलो नवाम् । मातरं तत्र संस्थाप्य जगाम पितुरन्तिके ॥ ११६ ॥
तत्पितापि स्वप्रजायाः पतित्वेनाखिलैर्जनैः । प्रजापतिरिति प्रोचे वलीयः कर्म नाम हि ॥ ११७ ॥
विश्वभूतिश्च्युतः शुक्रान्मृगावत्या अथोदरे । सप्तस्वप्नसमाख्यातविष्णुभावः समागमत् ॥ ११८ ॥
तया च काले सुषुवे सूनुः प्रथमशार्ङ्गभृत् । त्रिकरंडकपृष्ठत्वात्त्रिपृष्ठ इति संज्ञितः ॥ ११९ ॥
अशीतिधनुरुत्तुंगो रममाणोऽचलेन सः । अधीतसकलकलः क्रमेण प्राप यौवनम् ॥ १२० ॥
विशाखनन्दिजीवोऽथ भवं भ्रान्त्वा मृगाधिपः । जातस्तुंगगिरौ शंखपुरदेशमुपाद्रवत् ॥ १२१ ॥
तदानीमश्वग्रीवेण भूभुजा प्रतिविष्णुना । मम मृत्युः कुत इति पृष्टो नैमित्तिकोऽवदत् ॥ १२२ ॥
हन्ता स ते चंडवेगं यो दूतं धर्षयिष्यति । मारयिष्यति यस्तुंगगिरिसिंहं च हेलया ॥ १२३ ॥
अश्वग्रीवस्ततः शंखपुरे शालीनवापयत् । तद्रक्षार्थं चादिदेश वारकेण महीपतीन् ॥ १२४ ॥
सोऽश्रौषीच्च महावीर्यौ पुत्रौ राज्ञः प्रजापतेः । तस्मै द्रुतं चंडवेगं प्रैषीत् स्वार्थेन केनचित् ॥ १२५ ॥

---

१ त्रिवारं गृहीत्वा । २ स्वपुत्र्याः ।

प्रजापतेः कारयतः संगीतं निजपर्षदि । अकस्मात्प्राविशच्चंडवेगः स्वामिवलोन्मदः ॥ १२६ ॥
आगमाध्ययनस्येवाकालविद्युत्समुद्गमः । स विघ्नभूतो गीतस्याभ्युत्तस्थे तेन भूभुजा ॥ १२७ ॥
मंत्रिणश्च कुमाराभ्यां पृष्टा आख्यन् पुमानयम् । प्रधानभूतोऽश्वग्रीवमहाराजस्य दोष्मतः ॥ १२८ ॥
यदा व्रजत्ययं दूतो ज्ञापनीयस्तदा हि नौ । इति स्वकीयानचलत्रिपृष्ठावूचतुर्नरान् ॥ १२९ ॥
स प्रजापतिनान्येद्युर्विसृष्टोऽभ्यर्च्य गौरवात् । ययौ कुमारयोराशु ज्ञापितश्च निजैर्नरैः ॥ १३० ॥
गत्वा कुमारौ मार्गार्धे तमकुट्टयतां भटैः । पलायांचक्रिरे सद्यस्तत्सहायास्तु काकवत् ॥ १३१ ॥
तत्प्रजापतिना ज्ञात्वा भीतेनानायितो गृहे । सत्कृत्य चाधिकं चंडवेग एवमभाष्यत ॥ १३२ ॥
कुमारयोर्दुर्विनयं मा स्माख्यः स्वामिनः खलु । अज्ञानजाद्दुर्विनयान्न कुप्यन्ति महाशयाः ॥ १३३ ॥
आमेत्युक्त्वा ययौ दूतस्तत्पौरुषाच्चाग्रतो गतात् । विदाञ्चकाराश्वग्रीवस्तद्धर्षणमशेषतः ॥ १३४ ॥
तद्विदं च हयग्रीवं ज्ञात्वा दूतो यथातथम् । स्वधर्षणं तदाचख्यावलीकाख्यानकातरः ॥ १३५ ॥
अश्वग्रीवेण शिष्टान्यः प्रहितो ना प्रजापतिम् । गत्वावोचद्दश सिंहाच्छालीनाज्ञा प्रभोरियम् ॥ १३६ ॥
प्रजापतिः सुतावूचे युवाभ्यां कोपितः प्रभुः । प्रददौ यदवारेऽपि शासनं सिंहरक्षणे ॥ १३७ ॥
इत्युक्त्वा प्रस्थितं भूपं कुमारौ प्रतिषिध्य तौ । प्रजग्मतुः शंखपुरं सिंहयुद्धसकौतुकौ ॥ १३८ ॥
अन्येऽरक्षन्नृपाः सिंहं कथंकारं कियच्चिरम् । इति पृष्टास्त्रिपृष्ठेन शशंसुः शालिगोपकाः ॥ १३९ ॥
चतुरंगचमूवप्रं कृत्वारक्षन् क्षमाभुजः । आशालिग्रहणमहो वर्षवारक्रमागताः ॥ १४० ॥

१ तस्य चडवेगस्य पुरुषसमूहात् । २ असत्यकथने भीरुः । ३ पुरुषः । ४ शालिग्रहणदिनपर्यन्तम् ।

ऊचे त्रिपृष्ठस्तानेवं स्थास्यतीयच्चिरं हि कः । तद्दर्शयत मे सिंहं यथैकाकी निहन्मि तम् ॥ १४१ ॥
ततस्तेऽदर्शयन् सिंहं तुंगाचलगुहागतम् । जग्मतुश्च रथारूढौ तां गुहां रामशार्ङ्गिणौ ॥ १४२ ॥
चक्रुः कलकलं चोच्चैस्तद्गुहापार्श्वयोर्जनाः । तं श्रुत्वा निर्ययौ जृंभ्भादीर्णवक्त्रः स केसरी ॥ १४३ ॥
रथिकोऽहमसौ पत्तिरित्याजिर्न समावयोः । इति त्रिपृष्ठः फलकासिधरोऽथातरद्रथात् ॥ १४४ ॥
दंष्ट्राकरजशस्त्रोऽयं फलकासिधरस्त्वहम् । नैतदप्युचितमिति चर्मासी व्यमुचद्धरिः ॥ १४५ ॥
तत्प्रेक्ष्य केसरी जातजातिस्मृतिरचिन्तयत् । एकं धार्ष्ट्यमहो एको यदागान्मद्गुहामसौ ॥ १४६ ॥
अन्यद्रथादुत्तरणं तृतीयं शस्त्रमोचनम् । दुर्मदं तन्निहन्म्येष मदान्धमिव सिन्धुरम् ॥ १४७ ॥
विचिन्त्यैवं क्षणं व्यात्ताननः पञ्चाननाग्रणीः । दत्वा फालामुत्पपातोपत्रिपृष्ठं पपात च ॥ १४८ ॥
एकेन पाणिनोर्ध्वौष्ठमपरेणाधरं पुनः । धृत्वा त्रिपृष्ठस्तं सिंहं जीर्णवस्त्रमिवाद्दर्णात् ॥ १४९ ॥
पुष्पाभरणवस्त्राणि ववृषुर्देवता हरौ । लोकाश्च विस्मयस्मेराः साधु साध्विति तुष्टुवुः ॥ १५० ॥
अहो कथमनेनाहं कुमारेणाद्य मारितः । इत्यमर्षात् स्फुरंस्तस्थौ द्विधाभूतोऽपि केसरी ॥ १५१ ॥
गणभृद्गौतमजीवोऽन्त्यार्हज्जीवस्य शार्ङ्गिणः । तदानीं सारथिः सिंहं तं स्फुरन्तमदोऽवदत् ॥ १५२ ॥
नृष्वेष सिंहः पशुषु त्वं तु तन्मारितोऽमुना । मुधापमानं किं धत्से न हीनेन हतोऽसि यत् ॥ १५३ ॥
सुधयेव तया वाचा प्रीतो मृत्वा स केसरी । चतुर्थ्यां नरकावन्यां नारकः समजायत ॥ १५४ ॥

---

१ जृंभया व्यात्तमुखः । २ आजिर्युद्धम् । ३ फलकं चर्म भाषाया 'ढाल' । ४ दंष्ट्राश्च नखाश्चैव शस्त्राणि यस्य सः । ५ सिंहेषु श्रेष्ठः । ६ अदारयत् ।

तच्चर्मादाय कुमारौ चलितौ स्वपुरं प्रति । ग्राम्यानित्यूचतुर्वाजिग्रीवस्यैतद्धि कथ्यताम् ॥ १५५ ॥
शालीन् खाद यथेष्टं त्वं विश्वस्तस्तिष्ठ संप्रति । असौ हृदयशल्यं ते केसरी यन्निपातितः ॥ १५६ ॥
इत्युक्त्वा पोतनपुरे तौ कुमारावुपेयतुः । ग्रामीणास्तेऽपि गत्वाख्यन् हयग्रीवस्य तत्तथा ॥ १५७ ॥
हयग्रीवोऽपि साशंको जिघांसुर्माययापि तौ । अनुशिष्यादिशद्दूतं प्रजापतिनृपं प्रति ॥ १५८ ॥
गत्वा स दूतस्तं स्माहोपस्वामि प्रेषयात्मजौ । राज्यं यदनयोः स्वामी प्रदास्यति पृथक् पृथक् ॥ १५९ ॥
प्रजापतिर्बभाषेऽहं यास्यामि स्वामिनं स्वयम् । कृतं मम कुमाराभ्यां गताभ्यां तत्र सुन्दर ॥ १६० ॥
दूतो भूयोऽवदत्पुत्रौ न चेत्त्वं प्रेषयिष्यसि । तत्सज्जीभव युद्धाय मा वादीः कथितं न यत् ॥ १६१ ॥
इत्युक्तवन्तं तं दूतं तौ कुमारावमर्षणौ । धर्षयित्वा निजपुरान्निरवासयतां क्षणात् ॥ १६२ ॥
दूतो गत्वा तदाचख्यौ हयग्रीवाय धर्षणम् । हयग्रीवोऽपि कोपेन हुताशन इवाज्वलत् ॥ १६३ ॥
हयग्रीवः ससैन्योऽपि त्रिपृष्ठश्चाचलोऽपि च । युयुत्सवः समभ्येयू रथावर्तमहागिरौ ॥ १६४ ॥
मिथो युयुधिरे सैन्याः पक्षयोरुभयोरपि । सांवर्तिका इवांभोदा आस्फलन्तः परस्परम् ॥ १६५ ॥
क्षीणक्षीणेषु सैन्येषु सैन्ययुद्धं निषिध्य तौ । अश्वग्रीवस्त्रिपृष्ठश्चायुध्येतां रथिनौ स्वयम् ॥ १६६ ॥
मोघीकृतास्त्रोऽश्वग्रीवोऽरिग्रीवोच्छेदलंपटम् । त्रिपृष्ठायामुचच्चक्रं हाहाकारिजनेक्षितम् ॥ १६७ ॥
त्रिपृष्ठोरःस्थले चक्रं तुंबेन निपपात तत् । शरभो रभसोद्भ्रान्त इव पर्वतसानुनि ॥ १६८ ॥

---

१ मारितः। २ हन्तुमिच्छु । ३ यन्मया न कथितं त्वमागच्छेति तत्त्वं मा वद, यद्वा पश्चात्त्वं नैवं कथयेः; मा युद्धाय प्रथम कि न कथितमिति । ४ अग्निः । ५ प्रलयकालीनाः । ६ शत्रुग्रीवोच्छेदे लंपटम् ।

वीरप्रष्ठस्त्रिपृष्ठोऽथ तेन चक्रेण लीलया । चकर्त हयकंठस्य कंठं भंगो जनालवत् ॥ १८९ ॥
अचलश्च त्रिपृष्ठश्च प्रथमौ हलिशार्ङ्गिणौ । इत्याघोषि सुरैर्व्योम्नि पुष्पवृष्टिपुरस्सरम् ॥ १९० ॥
तयोः सर्वेऽपि राजानः सद्योऽपि प्रणतिं ययुः । ताभ्यां चासाधि भरतक्षेत्रस्यार्धमोजसा ॥ १९१ ॥
शिलां कोटिशिलां दोर्ष्णोत्पाट्य मूर्ध्न्यातपत्रवत् । प्रथमः पुंडरीकाक्षो धारयामास लीलया ॥ १९२ ॥
विक्रमाक्रान्तदिक्चक्रः स पोतनपुरं ययौ । अभिषिक्तश्चार्धचक्रिपदे देवैर्नृपैरपि ॥ १९३ ॥
यद्यद्वलं दूरतोऽपि त्रिपृष्ठं तत्तदाश्रयत् । रत्नीभूता गायनेषु तगेयुः केऽपि सुस्वराः ॥ १९४ ॥
एकदा तेषु गायत्सु शय्यापालं हरिर्निशि । ऊचे मयि शयानेऽमी निषेद्धव्यास्त्वया खलु ॥ १९५ ॥
आमेत्यूचे तल्पपाल आगान्निद्रा च शार्ङ्गिणः । तद्गीतलुब्धो व्यसाक्षीज्जागनान् सोऽपि तांश्च हि १९६
तेषु गायत्सु चोत्तस्थौ विष्णुरूचे च तल्पिकम् । त्वया विसृष्टाः किं नामी सोऽप्यूचे गीतलोभतः ॥ १९७ ॥
तच्छ्रुत्वा कुपितो विष्णुः प्रभाते तस्य कर्णयोः । अक्षेपयत्त्रपु तप्तं शय्यापालो मृतश्च सः ॥ १९८ ॥
त्रिपृष्ठः कर्मणा तेन वेद्यं कर्म न्यकाचयत् । प्रभुत्वादन्यदप्युग्रं कर्माबध्नाद्दुरागति ॥ १९९ ॥
अहिंसादिष्वविरतो महारम्भपरिग्रहः । चतुरशीत्यब्दलक्षीं प्राजापत्योऽत्यवाहयत् ॥ २०० ॥
मृत्वा च सप्तमावन्यामुदपद्यत नारकः । तद्वियोगात्प्रव्रजितोऽचलो मृत्वा शिवं ययौ ॥ २०१ ॥
त्रिपृष्ठजीवो नरकादुद्धृत्याजनि केसरी । केसर्यपि विपन्नः संश्चतुर्थं नरकं ययौ ॥ २०२ ॥
सोऽथ तिर्यग्मानुष्यादिभवान् बभ्राम भूरिशः । लब्ध्वा च मानुषं जन्म शुभं कर्मैकदार्जयत् ॥ २०३ ॥

१ वीरेषु श्रेष्ठः । २ हस्तेन । ३ तल्पं शय्या । ४ तल्पपालम् । ५ दुरागतिः परिणामो यस्य तत् । ६ प्रजापतिपुत्रः ।

ततोऽपरविदेहेषु मूकायां पुरि नृपतेः । धनंजयस्य धारिण्याः पत्न्याः कुक्षाववातरत् ॥ १८४ ॥
चतुर्दशमहास्वप्नाख्यातचक्रधरर्द्धिकः । काले तया च सुषुवे सूनुः संपूर्णलक्षणः ॥ १८५ ॥
प्रियमित्र इति नाम पितरौ तस्य चक्रतुः । पित्रोर्मनोरथैः सार्धं क्रमेण ववृधे च सः ॥ १८६ ॥
अथ संसारनिर्विण्णो धनञ्जयमहीपतिः । प्रियमित्रं सुतं राज्ये निधाय व्रतमाददे ॥ १८७ ॥
प्रियामिव भुवं पातुः प्रियमित्रस्य नृपतेः । चतुर्दश महारत्नान्युदपद्यन्त च क्रमात् ॥ १८८ ॥
षट्खंडं विजयं जेतुं चक्रमार्गानुगोऽचलत् । गत्वा च पूर्वाभिमुखं मागधं तीर्थमासदत् ॥ १८९ ॥
कृत्वाष्टमतपस्तत्र चतुरङ्गचमूवृतः । चतुर्थान्ते रथारूढः किञ्चिज्जत्वाग्रहीद्धनुः ॥ १९० ॥
मागधतीर्थकुमारं समुद्दिश्य महाभुजः । कंकपत्रं स्वनामांकं गरुत्मन्तमिवाक्षिपत् ॥ १९१ ॥
योजनानि द्वादशेषुः स लंघित्वा विहायसा । पुरो मागधदेवस्य पपातोत्पातवज्रवत् ॥ १९२ ॥
बाणो[1] मुमूर्षुणा[2] केन क्षिप्त इत्यभिचिन्तयन् । मागधेशो रुषोत्थाय[3] तं जग्राह शिलीमुखम्[4] ॥ १९३ ॥
चक्रिनामाक्षरश्रेणीं वीक्ष्य शान्तीभवन्[5] क्षणात् । उपायनान्युपादाय प्रियमित्रं स आययौ ॥ १९४ ॥
आज्ञाधरस्तवास्मीति जल्पन् व्योमस्थितो नृपम् । पूजयामास विविधोपायनैः स उपायवित् ॥ १९५ ॥
तं सत्कृत्य विसृज्याथ वलित्वा पारणं व्यधात् । चक्री मागधदेवस्य चक्रे चाष्टाह्निकोत्सवम् ॥ १९६ ॥
ततो जगाम याम्यायां कर्कस्थित[6] इवार्यमा । वरदामानममरं नृपः प्राग्वदसाधयत् ॥ १९७ ॥

---

१ बाणः । २ मर्तुमिच्छुना । ३ क्रोधेन । ४ बाणम् । ५ अशान्तः शान्तो भवन् "च्विः" । ६ कर्कराशिस्थितोऽर्यमा सूर्य यथा याम्यायां दक्षिणस्यां गच्छति तद्वत् ।

गत्वा प्रतीच्यां प्रज्ञासतीर्थेशमपि चक्रभृत् । विधिना साधयामास प्रति सिन्धुं जगाम च ॥ १९८ ॥
कृताष्टमस्य प्रत्यक्षीभूय सिन्धुर्महीपतेः । रत्नभद्रासने दिव्ये प्रददौ भूषणानि च ॥ १९९ ॥
तां विसृज्य स वैताढ्यं चक्ररत्नानुगो ययौ । वैताढ्याद्रिकुमारं चासाधयद्विहिताष्टमः ॥ २०० ॥
गतस्यान्तितमिस्रं चाष्टमस्थस्य महीपतेः । कृतमालः स्त्रीरत्नार्हमन्यच्चाभरणं ददौ ॥ २०१ ॥
उत्तीर्य चर्मणा सिन्धुं सेनानीश्चक्रिशासनात् । लीलया साधयामास सिन्धोः प्रथमनिष्कुटम् ॥ २०२ ॥
भूयोऽप्यभ्येत्य सेनानीः प्रियमित्रस्य शासनात् । कृताष्टमो दंडघातात्तमिस्रामुदघाटयत् ॥ २०३ ॥
चभयारूढो गजरत्नं तत्कुंभे न्यस्य दक्षिणे । मणिरत्नं प्रकाशाय तमिस्रां प्राविशद्गुहाम् ॥ २०४ ॥
काकिण्या मंडलान्यर्कसंकाशानि पार्श्वयोः । लिखन् गुहायां द्योताय चक्री चक्रानुगो ययौ ॥ २०५ ॥
पंद्ययोन्मग्नानिमग्ने नद्यौ तीर्त्वा महीपतिः । स्वयमुद्घटितेनोदग्द्वारेण निरैयाद्गिरेः ॥ २०६ ॥
आपातनाम्नः किरातानजैषीत्तत्र चक्रभृत् । असाधयच्च सेनान्या द्वितीयं सिंधुनिष्कुटम् ॥ २०७ ॥
चक्रानुगो निवृत्याथ भूपो वैताढ्यमभ्यगात् । वशीचक्रे द्वयोः श्रेण्योस्तत्र विद्याधरांश्च सः ॥ २०८ ॥
साधयित्वा स सेनान्या गांगं प्रथमनिष्कुटम् । स्वयमष्टमभक्तेन गंगादेवीमसाधयत् ॥ २०९ ॥
खंडप्रपातया सेनान्युद्घाटितकपाटया । वैताढ्याद्रेर्निर्जगाम स सैन्योऽपि महीपतिः ॥ २१० ॥
अथाष्टमतपःस्थस्य प्रियमित्रस्य चक्रिणः । नवापि निधयोऽभूवन्नैसर्पाद्या वशंवदाः ॥ २११ ॥

---

१ पाल्या । २ निरगच्छत् । ३ नैसर्प, पांडुक, पिंगल, सर्वरत्नक, महापद्म, काल, महाकाल, माणव, शंखा इति नव ।

सेनान्या साधयित्वा च द्वितीयं गांगनिष्कुटम् । जितषट्खण्डविजयश्चक्री मूकां पुरीं ययौ ॥ २१२ ॥
चक्रभृत्त्वाभिषेकोऽस्य चक्रे द्वादशवार्षिकः । अमरैर्नृवरैश्चापि महोत्सवपुरःसरम् ॥ २१३ ॥
नीत्या पालयतस्तस्य पृथिवीं पृथिवीपतेः । एकदा पोट्टिलाचार्य उद्याने समवासरत् ॥ २१४ ॥
धर्मं तदन्तिके श्रुत्वा राज्ये न्यस्य स्वमात्मजम्[1] । स प्रवव्राज तेपे च वर्षकोटीं तपः परम् ॥ २१५ ॥
पूर्वलक्षचतुरशीत्यायुः संन्यासपूर्वकम् । मृत्वा शुक्रे स सर्वार्थविमाने त्रिदशोऽभवत् ॥ २१६ ॥
च्युत्वेह भरते छत्रायां पुर्यां जितशत्रुतः । भद्रादेव्यां सोऽजनिष्ट नन्दनो नाम नन्दनः ॥ २१७ ॥
तं न्यस्योद्यौवनं राज्ये जितशत्रुर्महीपतिः । संसारवासनिर्विण्णः परिव्रज्यामुपाददे ॥ २१८ ॥
लोकानां हृदयानन्दो नन्दनोऽपि वसुन्धराम् । यथाविधि शशासैनां पाकशासनशासनः[2] ॥ २१९ ॥
चतुर्विंशत्यब्दलक्षीं जन्मतोऽतीत्य नन्दनः । विरक्तः पोट्टिलाचार्यसमीपे व्रतमाददे ॥ २२० ॥
मासोपवासैः सततैः श्रामण्यं स प्रकर्षयन् । व्यहार्षीद्गुरुणा सार्धं ग्रामाकरपुरादिषु ॥ २२१ ॥
उभाभ्यामपध्यानाभ्यां[3] बन्धनाभ्यां[4] च वर्जितः । त्रिभिर्दण्डैर्[5]गौरवैश्च[6] शल्यैश्च[7] रहितः सदा ॥ २२२ ॥
प्रक्षीणचतुष्कषायश्चतुःसंज्ञाविवर्जितः । चतुर्विकथारहितश्चतुर्धर्मपरायणः ॥ २२३ ॥
चतुर्विधैरुपसर्गैरपरिस्खलितोद्यमः । व्रतेषु पञ्चसूद्युक्तो द्वेषी कामेषु[8] पञ्चसु ॥ २२४ ॥
पञ्चप्रकारस्वाध्यायप्रसक्तः प्रतिवासरम् । बिभ्राणः समितीः पञ्च जेता पञ्चेन्द्रियाणि च ॥ २२५ ॥

१ पुत्रः । २ इन्द्रस्येवशासनं यस्य सः । ३ आर्तरौद्रे अपध्याने ताभ्याम् । ४ रागद्वेषरूपाभ्याम् । ५ मनोवाक्कायजैर्दण्डैः । ६ ऋद्धिरससातरूपैः । ७ मायानिदानमिथ्यादर्शनानि शल्यानि तैः । ८ पञ्चेन्द्रियविषयेषु ।

षड्जीवनिकायत्राता सप्तभीस्थानवर्जितः । विमुक्ताष्टमदस्थानः स नवब्रह्मगुप्तिकः ॥ २२६ ॥
दधद्दशविधं धर्मं सम्यगेकादशाङ्गभृत् । तपो द्वादशधा कुर्वन् द्वादशप्रतिमारुचिः[1] ॥ २२७ ॥
दुःसहामपि सहिष्णुः[2] परीषहपरंपराम् । निरीहो नन्दनमुनिर्वर्षलक्षं तपोऽकरोत् ॥ २२८ ॥
॥ सप्तभिः कुलकम् ॥

अर्हद्भक्त्यादिभिः स्थानैर्विंशत्यापि महातपाः । दुरर्जम्[3] अर्जयामास तीर्थकृन्नामकर्म सः ॥ २२९ ॥
स निष्कलंकं श्रामण्यं चरित्वा मूलतोऽपि हि । आयुःपर्यन्तसमये व्यधादाराधनामिति ॥ २३० ॥
ज्ञानाचारोऽष्टधा प्रोक्तो यः कालविनयादिकः । तत्र मे कोऽप्यतीचारो योऽभून्निन्दामि तं त्रिधा २३१
यः प्रोक्तो दर्शनाचारोऽष्टधा निःशंकितादिकः । तत्र मे योऽतिचारोऽभूत्त्रिधापि व्युत्सृजामि तम् २३२
या कृता प्राणिनां हिंसा सूक्ष्मा वा बादरापि वा। मोहाद्वा लोभतो वापि व्युत्सृजामि त्रिधापि ताम् २३३
हास्यभीलोभक्रोधाद्यैर्यन्मृषा भाषितं मया । तत्सर्वमपि निन्दामि प्रायश्चित्तं चरामि च ॥ २३४ ॥
अल्पं भूरि च यत्क्वापि परद्रव्यमदत्तकम् । आत्तं[4] रागादथ द्वेषात्तत्सर्वं व्युत्सृजाम्यहम् ॥ २३५ ॥
तैरश्चं मानुषं दिव्यं मैथुनं मयका[5] पुरा । यत्कृतं त्रिविधेनापि त्रिविधं व्युत्सृजामि तत् ॥ २३६ ॥
बहुधा यो धनधान्यपश्वादीनां परिग्रहः । लोभदोषान्मयाकारि व्युत्सृजामि त्रिधापि तम् ॥ २३७ ॥
पुत्रे कलत्रे मित्रे च बन्धौ धान्ये धने गृहे । अन्येष्वपि ममत्वं यत्तत्सर्वं व्युत्सृजाम्यहम् ॥ २३८ ॥
इन्द्रियैरभिभूतेन य आहारश्चतुर्विधः । मया रात्रावुपाभोजि निन्दामि तमपि त्रिधा ॥ २३९ ॥

१ द्वादशसु प्रतिमासु रुचिर्यस्य सः । २ सहनशीलः । ३ दुःखेनार्ज्यत इति दुरर्जम् । ४ गृहीतम् । ५ मया ।

क्रोधो मानो माया लोभो रागो द्वेषः कलिस्तथा । पैशून्यं परनिर्वादोऽभ्याख्यानमपरं च यत् ॥२४०॥
चारित्राचारविषयं दुष्टमाचरितं मया । तदहं त्रिविधेनापि व्युत्सृजामि समन्ततः ॥ २४१ ॥
यस्तपःस्वतिचारोऽभूद्बाह्येष्वाभ्यन्तरेषु च । त्रिविधं त्रिविधेनापि निन्दामि तमहं खलु ॥ २४२ ॥
धर्मानुष्ठानविषये यद्वीर्यं गोपितं मया । वीर्याचारातिचारं च निन्दामि तमपि त्रिधा ॥ २४३ ॥
हतो दुरुक्तश्च मया यो यस्याहारि किञ्चन । [1]यस्यापाकारि किंचिद्वा मम क्षाम्यतु सोऽखिलः ॥२४४॥
यश्च मित्रममित्रो[2] वा स्वजनोऽरिजनोऽपि वा । सर्वः क्षाम्यतु मे सर्वं सर्वेष्वपि समोऽस्म्यहम् ॥२४५॥
तिर्यक्त्वे सति तिर्यञ्चो नारकत्वे च नारकाः । अमरा अमरत्वे च मानुषत्वे च मानुषाः ॥ २४६ ॥
ये मया स्थापिता दुःखे सर्वे क्षाम्यन्तु ते मम । क्षाम्याम्यहमपि तेषां मैत्री सर्वेषु मे खलु ॥ २४७ ॥
जीवितं यौवनं लक्ष्मी रूपं प्रियसमागमः । चलं सर्वमिदं [3]वात्यानर्तिताब्धितरंगवत् ॥ २४८ ॥
व्याधिजन्मजरामृत्युग्रस्तानां प्राणिनामिह । विना जिनोदितं धर्मं शरणं कोऽपि नापरः ॥ २४९ ॥
सर्वेऽपि जीवाः स्वजना जाताः परजनाश्च ते । विदधीत प्रतिबन्धं तेषु को हि मनागपि ॥ २५० ॥
एक उत्पद्यते जन्तुरेक एव विपद्यते । सुखान्यनुभवत्येको दुःखान्यपि स एव हि ॥ २५१ ॥
अन्यद्वपुरिदं तावदन्यद्धान्यधनादिकम् । बन्धवोऽन्येऽन्यश्च जीवो वृथा मुह्यति [4]बालिशः ॥ २५२ ॥
वसारुधिरमांसास्थियकृद्विण्मूत्रपूरिते । वपुष्यशुचिनिलये मूर्छां कुर्वीत कः सुधीः ॥ २५३ ॥

---

१ अपकृतम् । २ अमित्रः शत्रुः । ३ वातानां समूहो वात्या तया नर्तिता ये समुद्रतरंगास्तद्वत् । ४ मूर्खः ।

अवक्रयात्त[1]वेश्मेव मोक्तव्यमचिरादपि । लालितं पालितं वापि विनश्वरमिदं वपुः ॥ २५४ ॥
धीरेण कातरेणापि मर्तव्यं खलु देहिना । तन्म्रियेत तथा धीमान्न म्रियेत यथा पुनः ॥ २५५ ॥
अर्हन्तो मम शरणं शरणं सिद्धसाधवः । उदीरितः केवलिभिर्धर्मः शरणमुच्चकैः ॥ २५६ ॥
जिनधर्मो मम माता गुरुस्तातोऽथ सोदराः । साधवः साधर्मिकाश्च बन्धवोऽन्यत्तु जालवत् ॥ २५७ ॥
ऋषभादींस्तीर्थकरांन्नमस्याम्यखिलानपि । भरतैरावतविदेहार्हतोऽपि नमाम्यहम् ॥ २५८ ॥
तीर्थकृद्भ्यो नमस्कारो देहभाजां भवच्छिदे । भवति क्रियमाणः स बोधिलाभाय चोच्चकैः ॥ २५९ ॥
सिद्धेभ्यश्च नमस्कारं भगवद्भ्यः करोम्यहम् । कर्मैधो[2]ऽदाहि यैर्ध्यानाग्निना भवसहस्रजम् ॥ २६० ॥
आचार्येभ्यः पञ्चविधाचारेभ्यश्च नमो नमः । यैर्धार्यते प्रवचनं भवच्छेदे सदोद्यतैः ॥ २६१ ॥
श्रुतं बिभ्रति ये सर्वं शिष्येभ्यो व्याहरन्ति[3] च । नमस्तेभ्यो महात्मभ्य उपाध्यायेभ्य उच्चकैः ॥२६२॥
शील[4]व्रतसनाथेभ्यः साधुभ्यश्च नमो नमः । भवलक्षसन्निबद्धं पापं निर्नाशयन्ति ये ॥ २६३ ॥
सावद्यं योगमुपधिं बाह्यमाभ्यन्तरं तथा । यावज्जीवं त्रिविधेन त्रिविधं व्युत्सृजाम्यहम् ॥ २६४ ॥
चतुर्विधाहारमपि यावज्जीवं त्यजाम्यहम् । उच्छ्वासे चरमे देहमपि हि व्युत्सृजाम्यहम् ॥ २६५ ॥
दु[5]ष्कर्मगर्हणां जन्तुक्षमणां भावनामपि । चतुःशरणं च नमस्कारं चानशनं तथा ॥ २६६ ॥
एवमाराधनां षोढा[6] स कृत्वा नन्दनो मुनिः । धर्माचार्यानक्षमयत् साधून् साध्वीश्च सर्वतः ॥ २६७ ॥

---

१ अवक्रयेण मूल्येनात्तं गृहीतं वेश्म गृहम् । २ कर्माण्येव एधः काष्ठम् । ३ कथयन्ति । ४ शीलव्रतसहितेभ्यः । ५ दुष्कर्मनिन्दाम् । ६ षट्प्रकारैः ।

षष्टिं दिनान्यनशनं पालयित्वा समाहितः । पञ्चविंशत्यब्दलक्षपूर्णायुः सोऽममो मृतः ॥ २६८ ॥
अथाधिप्राणतं पुष्पोत्तरनामनि विस्तृते । विमाने स उपपेदे शय्यायामुदपद्यत ॥ २६९ ॥
अन्तर्मुहूर्तान्निष्पन्नः स तु देवो महर्द्धिकः । अपनीय देवदूष्यमुपविष्टो व्यलोकयत् ॥ २७० ॥
विमानं देवसंपातं देवर्द्धिं च विलोक्य ताम् । दध्यौ स विस्मितः प्राप्तं केनेदं तपसा मया ॥ २७१ ॥
सोऽपश्यच्चावधेः पूर्वभवं तच्च व्रतावनम् । अहो प्रभावोऽर्हद्धर्मस्येति चेतस्यचिन्तयत् ॥ २७२ ॥
अत्रान्तरे सुराः सर्वे तमुत्पन्नं सुरोत्तमम् । संभूय बद्धाञ्जलयो जगदुर्मुदिता इति ॥ २७३ ॥
स्वामिञ्जय जगन्नंद जगन्नन्द चिरं जय । त्वं नः स्वामी जितं त्रायस्वाजितं विजयस्व च ॥ २७४ ॥
इदं विमानं भवतो वयमाज्ञाकराः सुराः । अमून्युपवनान्युच्चैरमूर्मज्जनवापयः ॥ २७५ ॥
इदं च सिद्धायतनं सुधर्मेयं महासभा । मज्जनौकोऽलंकुरुष्वाभिषेकं कुर्महे यथा ॥ २७६ ॥
एवं तैरमरैरुक्तः स गत्वा मज्जनौकसि । सिंहासने सांघ्रिपीठे निषसादामराग्रणीः ॥ २७७ ॥
दिव्येन पयसा तत्राभिषिक्तः कुंभपाणिभिः । निन्ये च किंकरसुरैः सोऽलंकारनिकेतनम् ॥ २७८ ॥
देवदूष्ये न्यधादंगे वाससी तत्र सोऽमरः । अंगरागं भूषणानि किरीटप्रभृतीनि च ॥ २७९ ॥
व्यवसायसभां गत्वावाचयत्पुस्तकं च सः । पुष्पादिपूजामादाय सिद्धालयमियाय च ॥ २८० ॥
अष्टोत्तरार्हत्प्रतिमाशतं स्नपयति स्म सः । आनर्च च ववन्दे च तुष्टाव च समाहितः ॥ २८१ ॥

१ ममतारहितः । २ प्राणते । ३ व्रतपालनम् । ४ जगत् नदयत्यानंदयति तत्संबुद्धौ । ५ जितं त्रायस्व, अजितं च विजयस्वेत्यन्वयः । ६ स्नानवाप्यः । ७ स्नानगृहम् । ८ पादपीठसहिते ।

गत्वा सुधर्मा[1]मास्थानीं संगीतकमकारयत् । विमाने तत्र भोगांश्च भुञ्जानोऽस्थाद्यथारुचि ॥ २८२ ॥
कल्याणकेष्वर्हतां स विदेहादिषु भूमिषु । अगाज्जिनान् ववन्दे च सम्यक्त्वगुणभूषणः ॥ २८३ ॥
आयुर्विंशतिसागरोपममितं सोऽपूरि देवाग्रणीः पर्यन्तेऽपि विशेषतः प्रतिकलं देदीप्यमानः श्रिया ।
मुह्यन्ति ह्यपरे त्रिविष्टपसदः[2] षण्मासशेषायुषः क्वाप्युच्चैर्न तु तीर्थकृद्विपदोऽत्यासन्नपुण्योदयाः ॥२८४॥

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये दशमे पर्वणि श्रीमहावीरचरितेपूर्वभव

वर्णनो नाम प्रथमः सर्गः ॥

---

१ सभाम् । २ देवाः ।

## ॥ अथ द्वितीयः सर्गः ॥

इतश्च जंबूद्वीपेऽस्मिन् क्षेत्रेऽस्ति भरताभिधे । ब्राह्मणकुंडग्रामाख्यसंनिवेशो द्विजन्मनाम् ॥ १ ॥
तत्र चर्षभदत्तोऽभूत् कौडालसकुलो द्विजः । देवानन्दा च तद्भार्या जालन्धरकुलोद्भवा ॥ २ ॥
च्युत्वा च नन्दनो हस्तोत्तरर्क्षस्थे निशाकरे । आषाढस्य श्वेतषष्ठ्यां तस्याः कुक्षाववातरत् ॥ ३ ॥
देवानन्दा सुखसुप्ता महास्वप्नांश्चतुर्दश । ददर्श प्रातराख्यच्च पत्ये सोऽपि व्यचारयत् ॥ ४ ॥
चतुर्णां छन्दसां पारदृश्वा परमनैष्ठिकः । सूनुर्भवत्या भविता स्वप्नैरेभिर्न संशयः ॥ ५ ॥
देवानन्दागर्भगते प्रभौ तस्य द्विजन्मनः । बभूव महती ऋद्धिः कल्पद्रुम इवागते ॥ ६ ॥
तस्या गर्भस्थिते नाथे ह्यशीतिदिवसात्यये । सौधर्मकल्पाधिपतेः सिंहासनमकंपत ॥ ७ ॥
ज्ञात्वा चावधिना देवानन्दागर्भगतं प्रभुम् । सिंहासनात् समुत्थाय शक्रो नत्वेत्यचिन्तयत् ॥ ८ ॥
त्रिजगद्गुरवोऽर्हन्तो नोत्पद्यन्ते कदाचन । तुच्छकुले रोरकुले भिक्षावृत्तिकुलेऽपि वा ॥ ९ ॥
इक्ष्वाकुवंशप्रभृतिक्षत्रवंशेषु किं त्वमी । जायन्ते पुरुषसिंहा मुक्ताः शुक्त्यादिकेष्विव ॥ १० ॥
तदसंगतमापन्नं जन्म नीचकुले प्रभोः । प्राज्यं कर्मान्यथा कर्तुं यद्वार्हन्तोऽपि नेशते ॥ ११ ॥
मरीचिजन्मनि कुलमदं नाथेन कुर्वता । अर्जितं नीचकैर्गोत्रकर्माद्यापि ह्युपस्थितम् ॥ १२ ॥
कर्मवशान्नीचकुलेषूत्पन्नानर्हतोऽन्यतः । देशं महाकुलेऽस्माकमधिकारोऽस्ति सर्वदा ॥ १३ ॥

---

१ हस्तोत्तर उत्तराषाढा तन्नाम्नि नक्षत्रे स्थिते चंद्रे । २ दीनकुले । ३ न समर्था भवन्ति ।

कोऽधुनास्ति महावंश्यो राजा राज्ञी च भारते । यत्र संचार्यते स्वामी कुन्दाङ्गृग इवांबुजे ॥ १४ ॥
[1]ज्ञातमस्तीह भरते महीमंडलमंडनम् । क्षत्रियकुंडग्रामाख्यं पुरं मत्पुरसोदरम् ॥ १५ ॥
स्थानं विविधचैत्यानां धर्मस्यैकं निबन्धनम् । अन्यायैरपरिस्पृष्टं पवित्रं तच्च साधुभिः ॥ १६ ॥
मृगयामद्यपानादिव्यसनास्पृष्टनागरम् । तदेव भरतक्षेत्रपावनं तीर्थवद्भुवः ॥ १७ ॥
तत्रैक्ष्वाको ज्ञातवंश्यः सिद्धार्थोऽस्ति महीपतिः । धर्मेणैव हि सिद्धार्थं सदात्मानममंस्त यः ॥ १८ ॥
जीवाजीवादितत्त्वज्ञो न्यायवर्त्ममहाध्वगः । प्रजाः पथि स्थापयिता हितकामी पितेव सः ॥ १९ ॥
दीनानाथादिलोकानां समुद्धरणबान्धवः । शरण्यः शरणेच्छूनां स क्षत्रियशिरोमणिः ॥ २० ॥
तस्यास्ति त्रिशला नाम सतीजनमतल्लिका[2] । पुण्यभूरग्रमहिषी महनीयगुणाकृतिः[3] ॥ २१ ॥
निसर्गतो निर्मलया तत्तद्गुणतरंगया । तया पवित्र्यते धात्री मन्दाकिन्येव[4] संप्रति ॥ २२ ॥
मायया स्त्रीजन्मसहचारिण्याप्यकलंकिता । सा निसर्गऋजुर्देवी सुगृहीताभिधा[5] भुवि ॥ २३ ॥
सा चास्ति सांप्रतं गुर्वी कार्यः संचारणाद्द्रुतम् । तस्या देवानन्दायाश्च गर्भयोर्व्यत्ययो मया ॥ २४ ॥
विमृश्यैवं शतमखः समाहूय झगित्यपि । आदिदेश तथा कर्तुं सेनान्यं नैगमेषिणम् ॥ २५ ॥
विदधे नैगमेषी च तथैव स्वामिशासनम् । देवानन्दात्रिशलयोर्गर्भव्यत्ययलक्षणम् ॥ २६ ॥
देवानन्दा ब्राह्मणी सा शयिता पूर्ववीक्षितान् । मुखान्निःसरतोऽद्राक्षीन्महास्वप्नांश्चतुर्दश ॥ २७ ॥
उत्थाय वक्ष आम्लाना निः[6]स्थामा ज्वरजर्जरा । केनापि जह्रे मे गर्भ इति चुक्रोश सा चिरम् ॥ २८ ॥

१ प्रसिद्धम् । २ मतल्लिका श्रेष्ठा । ३ स्तवनीयगुणाकृतिः । ४ गंगा । ५ सुखेन गृहीताऽभिधा नाम यस्याः सा । ६ निस्तेजाः ।

कृष्णाश्विनत्रयोदश्यां चन्द्रे हस्तोत्तरास्थिते । स देवस्त्रिशलागर्भे स्वामिनं निभृतं न्यधात् ॥ २९ ॥
गजो वृषो हरिः[1] साभिषेकश्रीः स्रक् शशी रविः । महाध्वजः पूर्णकुम्भः पद्मसरः सरित्पतिः[2] ॥ ३० ॥
विमानं रत्नपुंजश्च निर्धूमोऽग्निरिति क्रमात् । ददर्श स्वामिनी स्वप्नान्मुखे प्रविशतस्तदा ॥ ३१ ॥
इन्द्रैः पत्या च तज्ज्ञैश्च तीर्थकृज्जन्मलक्षणे । उदीरिते स्वप्नफले त्रिशला देव्यमोदत ॥ ३२ ॥
दधार त्रिशलादेवी मुदिता गर्भमद्भुतम् । अप्रमत्तं विहरन्ती लीलासदनभूष्वपि[3] ॥ ३३ ॥
गर्भस्थेऽथ प्रभौ शक्राज्ञया जृंभकनाकिनः । भूयो भूयो निधानानि न्यधुः सिद्धार्थवेश्मनि ॥ ३४ ॥
सर्वं ज्ञातकुलं भूरिधनधान्यादिऋद्धिभिः । गर्भावतीर्णभगवत्प्रभावाद्वृधेतराम् ॥ ३५ ॥
सिद्धार्थस्यापि नृपतेर्दर्पात्[4] प्रणताः पुरा । प्रणेमुर्भूभुजोऽभ्येत्य स्वयं प्राभृतपाणयः ॥ ३६ ॥
मयि पस्पन्दमानेऽत्र मातुर्मा वेदना स्म भूत् । इत्यस्थान्निभृतः[5] स्वामी गर्भवासेऽपि योगिवत् ॥ ३७ ॥
स्वामी संवृतसर्वांगव्यापारोऽस्थात्तथोदरे । नालक्ष्यत यथा मात्राप्यन्तस्तिष्ठति वा न वा ॥ ३८ ॥
तदा च त्रिशला दध्यौ किं गर्भो गलितो मम । केनाप्यपहृतः किं वा विनष्टस्तंभितोऽथवा ॥ ३९ ॥
यद्येतदपि सञ्जातं तदलं जीवितेन मे । सह्यं हि मृत्युजं दुःखं गर्भभ्रंशभवं न तु ॥ ४० ॥
इत्यार्त्तध्यानभाग्देवी रुदती लुलितालका । त्यक्तांगरागा हस्ताब्जविन्यस्तमुखपंकजा ॥ ४१ ॥
त्यक्ताभरणसंभारा निःश्वासविधुराधरा । सखीष्वपि हि तूष्णीका नाशेत बुभुजे न च ॥ ४२ ॥
तत्तु विज्ञाय सिद्धार्थमहीपतिरखिद्यत । तत्पुत्रभांडे च नन्दिवर्धनोऽथ सुदर्शना ॥ ४३ ॥

१ सिंहः । २ समुद्रः । ३ लीलागृहस्थानेषु । ४ गर्वात् । ५ निश्चलः ।

धारयामासतुर्द्वे तु पार्श्वयोश्चारुचामरौ । सर्वांगहेमाभरणे मेरुतट्यामिवोडुपौ ॥ १८४ ॥
तस्थौ वायव्यदिश्येका रूप्यभृंगारपाणिका । दिशि [1]दक्षिणपूर्वस्यां तालवृन्तधराऽपरा ॥ १८५ ॥
पृष्ठे [2]वैडूर्यदंडानि [3]पांडुच्छत्राण्यधारयन् । अष्टाग्रसहस्रस्वर्णशलाकान्यमरेश्वराः [4] ॥ १८६ ॥
पार्श्वयोः शिविकायास्तु सौधर्मेशानवासवौ । तोरणस्तंभसदृशौ तस्थतुर्धृतचामरौ ॥ १८७ ॥
सहस्रवाह्यामुदक्षुः शिविकामादितो नराः । ततः शक्रेशानबलिचमराद्या दिवौकसः [5] ॥ १८८ ॥
दक्षिणेनोपरिष्टात्तु शिविकां शक्र आददे । उपरिष्टादुत्तरेण त्वीशानाधिपतिः स्वयम् ॥ १८९ ॥
दधतुश्चमरबली दक्षिणोत्तरयोरधः । अन्ये भुवनपत्याद्या दध्रिरे तु यथोचितम् ॥ १९० ॥
तदानीं गच्छदागच्छद्देवैरजनि संकुलम् । दिनान्ते पक्षिभिरिवान्तरिक्षमधिकत्वरैः [6] ॥ १९१ ॥
तया शिविकया स्वामी त्रिदशैरुह्यमानया । ज्ञातखंडवनं नाम ययावुपवनोत्तमम् ॥ १९२ ॥
प्रियस्येव हिमर्तोरागमे कोरकच्छलात् [7] । रोमाञ्चिताङ्गीभिरिव [8] लवलीभिर्मनोरमम् ॥ १९३ ॥
कुसुंभरक्तवासोभिरिव न्यस्तैर्वनश्रिया । नागरङ्गवनैः पक्वफलमालिभिरंकितम् ॥ १९४ ॥
कृष्णेक्षूणां मिथः [9]पत्राश्लेषसाराविणैः सदा । पथिकानाह्वयदिव तदुद्यानं विवेश सः ॥ १९५ ॥

॥ त्रिभिर्विशेषकम् ॥

शिविकायाः समुत्तीर्य भूषणान्यत्यजत्प्रभुः । देवदूष्यं देवराजः स्कन्धे च निदधे प्रभोः ॥ १९६ ॥

---

१ आग्नेय्याम् । २ वैडूर्यरत्नानां दंडा येषु तानि । ३ श्वेतच्छत्राणि । ४ अमराणां देवानामीश्वरा इन्द्राः । ५ आकाशः । ६ अधिका त्वरा येषां तैः । ७ कलिकामिषात् । ८ रोमांचितमंगं यासां ताभिः । ९ पर्णसंपर्कजैः कोलाहलैः ।

मुष्टिभिः पञ्चभिः केशानुद्दध्रे त्रिजगद्गुरुः । प्रतीच्छ्य दूष्ये तान् शक्रश्चिक्षेप क्षीरनीरधौ ॥ १९७ ॥
तेनागत्य निषिद्धे च तुमुले त्रिजगत्प्रभुः । कृत्वा सिद्धनमस्कारं चारित्रं प्रत्यपद्यत ॥ १९८ ॥
वर्षत्रिंशति जन्मतोऽथ समतीतायां सहे[1] मासि च श्यामायां दशमीतिथौ हिमकरे[2] हस्तोत्तरासु स्थिते यामेऽह्नश्चरमे तु षष्ठतपसः साक्षात्त्रिलोक्याः प्रभोश्चारित्रेण समं तदा समभवज्ज्ञानं मनःपर्ययम्॥१९९॥

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये दशमे पर्वणि श्रीमहावीरजन्मप्रव्रज्यावर्णनो नाम द्वितीयः सर्गः । समाप्तः ॥

---

१ मार्गशीर्षे । २ चन्द्रे ।

पित्रोर्विज्ञाय तद्दुःखं ज्ञानत्रयधरः प्रभुः । अंगुलिं चालयामास गर्भज्ञापनहेतवे ॥ ४४ ॥
मद्गर्भोऽहृत एवेति ज्ञात्वा स्वामिन्यमोदत । अमोदयच्च सिद्धार्थं गर्भस्पन्दनशंसनात् ॥ ४५ ॥
अचिन्तयच्च भगवान्मय्यदृष्टेऽपि कोऽप्यहो । मातापित्रोर्महान् स्नेहो जीवतोरनयोर्यदि ॥ ४६ ॥
प्रव्रजिष्याम्यहं स्नेहमोहादेतौ तदा ध्रुवम् । आर्तध्यानगतौ कर्माशुभं बह्वर्जयिष्यतः ॥ ४७ ॥
॥ युग्मम् ॥

अथैवं सप्तमे मासि जग्राहाभिग्रहं प्रभुः । उपादास्ये परिव्रज्यां न पित्रोर्जीवतोरहम् ॥ ४८ ॥
अथ दिक्षु प्रसन्नासु स्वोच्चस्थेषु ग्रहेषु च । प्रदक्षिणेऽनुकूले च भूमिसर्पिणि मारुते ॥ ४९ ॥
प्रमोदपूर्णे जगति शकुनेषु जयिष्वलम् । अर्धाष्टमदिनाग्रेषु मासेषु नवसूच्चकैः ॥ ५० ॥
शुक्लचैत्रत्रयोदश्यां चन्द्रे हस्तोत्तरागते । सिंहांकं काञ्चनरुचिं[1] स्वामिनी सुषुवे सुतम् ॥ ५१ ॥
॥ त्रिभिर्विशेषकम् ॥

षट्पञ्चाशद्दिक्कुमार्योऽभ्येत्य भोगंकरादयः । स्वामिनः स्वामिमातुश्च सूतिकर्माणि चक्रिरे ॥ ५२ ॥
शक्रोऽप्यासनकंपेन तत्कालं सपरिच्छदः । विज्ञाय स्वामिनो जन्मसूतिकागृहमाययौ ॥ ५३ ॥
अर्हन्तमर्हदम्बां च दूरतोऽपि प्रणम्य सः । उपसृत्यागतो देव्याश्चावस्वापनिकां ददौ ॥ ५४ ॥
देव्याः पार्श्वे च भगवत्प्रतिरूपं निधाय सः । विचक्रे पञ्चधात्मानमतृप्तो भक्तिकर्मणि ॥ ५५ ॥
एकः शक्रः स्वपाणिभ्यां भगवन्तमुपाददे । उपरि स्वामिनश्छत्रं द्वैतीयीकस्त्वधारयत् ॥ ५६ ॥

---

१ सुवर्णकान्तिम् ।

स्वामिनः पार्श्वयोर्द्वौ तु बिभ्रतुश्चारुचामरे । वज्रमुल्लालयन्नन्यो नृत्यंश्च पुरतो ययौ ॥ ५७ ॥
गत्वा मेरावतिपाण्डुकम्बलामासदच्छिलाम् । तत्र सिंहासनं भेजे शक्रोऽङ्कारोपितप्रभुः ॥ ५८ ॥
तदा स्नपयितुं नाथं त्रिषष्टिरपरेऽपि हि । एयुरिन्द्रा आभियोग्यैस्तीर्थानायितवारयः[1] ॥ ५९ ॥
इयन्तं वारिसंभारं[2] कथं स्वामी सहिष्यते । इत्याशशंके शक्रेण भक्तिकोमलचेतसा ॥ ६० ॥
तदाशंकानिरासाय लीलया परमेश्वरः । मेरुशैलं वामपादांगुष्ठाग्रेण न्यपीडयत् ॥ ६१ ॥
शिरांसि मेरोरनमन्नमस्कर्तुमिव प्रभुम् । तदन्तिकमिवायातुमचलंश्च कुलाचलाः[3] ॥ ६२ ॥
अतुच्छमुच्छलन्ति[4] स्म स्नात्रं कर्तुमिवार्णवाः । विवेपे[5] सत्वरं तत्र नर्तनाभिमुखेव भूः ॥ ६३ ॥
किमेतदिति संचिंत्यावधिज्ञानप्रयोगतः । लीलायितं भगवतो विदाञ्चक्रे बिडौजसा[6] ॥ ६४ ॥
स्वामिन्ननन्यसामान्यं सामान्यो मादृशो जनः । विदांकरोतु माहात्म्यं कथंकारं तवेदृशम् ॥ ६५ ॥
तन्मिथ्यादुष्कृतं भूयाच्चिन्तितं यन्मयान्यथा । इतीन्द्रेण ब्रुवाणेन प्रणेमे परमेश्वरः ॥ ६६ ॥
सानन्दं वादितातोद्यं चक्रे भर्तुः सुरेश्वरैः । तीर्थगन्धोदकैः पुण्यैरभिषेकमहोत्सवः ॥ ६७ ॥
अभिषेकजलं तत्तु सुरासुरनरोरगाः । ववन्दिरे मुहुः सार्वांगीणं[7] च परिचिक्षिपुः ॥ ६८ ॥
प्रभुस्नात्रजलालीढा वन्दनीया मृदप्यभूत् । गुरूणां किल संसर्गाद्गौरवं स्याल्लघोरपि ॥ ६९ ॥
निवेश्येशाननाथांके सौधर्मेन्द्रोऽप्यथ प्रभुम् । स्नपयित्वार्चयित्वाथ कृत्वारात्रिकमस्तवीत् ॥ ७० ॥
नमोऽर्हते भगवते स्वयंबुद्धाय वेधसे । तीर्थकरायादिकृते पुरुषोत्तमाय ते ॥ ७१ ॥

---

१ तीर्थेभ्य आनायितं जलं यैस्ते। २ जलसमूहम्। ३ कुलपर्वताः। ४ उच्चैः। ५ चकंपे। ६ इन्द्रेण। ७सर्वाण्यंगानि व्याप्नोतीति तथा।

देवैः शक्रादिभिर्नंदिवर्धनाद्यैश्च पार्थिवैः । दीक्षाभिषेको विदधे श्रीवीरस्य यथाविधि ॥ १७० ॥
भ्रातुर्विरहदुःखेन राहुणेन्दुरिवाकुलः । स्वानादिदेशेति तदा कथंचिन्नन्दिवर्धनः ॥ १७१ ॥
सुवर्णवेदिकास्तंभां द्युसदास्थानिकामिव । सतारिकामिव दिवं मुक्तास्वस्तिकलाञ्छिताम् ॥ १७२ ॥
स्वर्णसिंहासनगर्भां सार्कां मेरुतटीमिव । भ्रक्वणत्किंकिणीमालां पालकस्यानुजामिव ॥ १७३ ॥
समुल्लध्वजपटां गंगामिव महोर्मिकाम् । पञ्चाशद्धनुरायामां षट्त्रिंशद्धनुरुन्नताम् ॥ १७४ ॥
पञ्चाग्रविंशतिधनुर्विस्तृतां शिबिकोत्तमाम् । चन्द्रप्रभाख्यां कुर्वन्तु श्रीवीरस्यासनोचिताम् ॥ १७५ ॥
॥ चतुर्भिः कलापकम् ॥
त्वरितं कारयामासुः शिबिकां तां तथैव ते । राज्ञां हि वचसार्थः स्यान्मनसा द्युसदामिव ॥ १७६ ॥
तादृशीमेव शिबिकां तदा शक्रोऽप्यकारयत् । युग्मजाते इवाभातां ते तुल्ये तुल्यया श्रिया ॥ १७७ ॥
प्रथमायां शिबिकायां द्वितीयशिबिका तदा । देवशक्त्यान्तर्बभूव नद्यामिव नदी क्षणात् ॥ १७८ ॥
ततः प्रदक्षिणीकृत्य शिबिकामधिरुह्य च । सिंहासनमलंचक्रे सांघ्रिपीठं जगत्प्रभुः ॥ १७९ ॥
मंगल्यश्वेतवसनः सचन्द्रिक इवोडुपः । विभुर्बभौ भूषणैश्च कल्पद्रुम इवापरः ॥ १८० ॥
प्रभौ प्राङ्मुखमासीने शुचीभूताः सुवाससः । विचित्ररत्नालंकाराः सर्वा दक्षिणपार्श्वगाः ॥ १८१ ॥
प्रालंबैः शाखिन इव शोभिता हस्तशाटकैः । निषेदुरेकमनसस्तदा कुलमहत्तराः ॥ १८२ ॥ युग्मम् ॥
बभार मुक्तालंकारा विमलांशुकभृद्विभोः । मूर्धन्येकाङ्गना छत्रं ज्योत्स्नेव रजनीकरम् ॥ १८३ ॥

---

१ देवसभाम् । २ सूर्यसहिताम् । ३ पालकनाम्नो विमानस्य । ४ वसन वस्त्रम् । ५ चन्द्रः । ६ वृक्षाः । ७ चन्द्रम् ।

महाकुलो राजपुत्रो महर्द्धिर्नवयौवनः । जमालिः परिणिनायोद्यौवनां प्रियदर्शनाम् ॥ १५५ ॥
अष्टाविंशे जन्मतोऽब्दे स्वामिनः पितरावथ । विहितानशनौ मृत्वा जग्मतुः कल्पमच्युतम् ॥ १५६ ॥
सिद्धार्थराजत्रिशलाजीवावच्युततश्च्युतौ । क्षेत्रेऽपरविदेहाख्ये प्राप्स्यतः पदमव्ययम् ॥ १५७ ॥
पित्रोः कृतेऽङ्गसंस्कारे तत्रातीते च वासरे । सान्तःपुरं शोकमग्नं स्वाम्यूचे नन्दिवर्धनम् ॥ १५८ ॥
सदा सन्निहितो मृत्युर्जीवितं नश्वरं सदा । उपस्थिते वासरेऽस्मिन्न हि शोकः प्रतिक्रिया ॥ १५९ ॥
धैर्यालंबनपूर्वं च धर्मानुष्ठानमेव हि । युज्यते न तु शोकादि भ्रातः कापुरुषोचितम् ॥ १६० ॥
स्वामिना बोधितश्चैवं स्वस्थोऽभून्नन्दिवर्धनः । पित्र्यं राज्यमलंकर्तुं सोऽभ्यर्थयत च प्रभुम् ॥ १६१ ॥
पित्र्यं राज्यं यदा वीरो भवोद्विग्नो न शिश्रिये । राजा चक्रे तदामात्यैः साग्रहैर्नन्दिवर्धनः ॥ १६२ ॥
चिरेप्सितपरिव्रज्याग्रहणायाथ सादरः । आपप्रच्छे महावीरो भ्रातरं नन्दिवर्धनम् ॥ १६३ ॥
शोकस्खलितवाग्नन्दिवर्धनोऽप्यभ्यधादिति । अद्यापि पितरौ भ्रातर्गच्छतो विस्मृतिं न हि ॥ १६४ ॥
सर्वोऽप्यहमिवाद्यापि स्वजनः शोकपूरितः । क्षते क्षारं निक्षिपसि स्ववियोगेन किं मयि ॥ १६५ ॥
एवं च ज्यायसो भ्रातुः सशोकस्योपरोधतः । जगत्पतिर्भावयतिरलंकारैरलंकृतः ॥ १६६ ॥
कायोत्सर्गधरो नित्यं ब्रह्मचर्यपरायणः । स्नानांगरागरहितो विशुद्धध्यानतत्परः ॥ १६७ ॥
एषणीयप्रासुकान्नप्राणवृत्तिर्महामनाः । वर्षमेकं कथमपि गृहवासेऽत्यवाहयत् ॥ १६८ ॥
तीर्थं प्रवर्तयेत्युक्तस्ततो लोकान्तिकामरैः । यथाकामितमर्थिभ्यो दानं स्वाम्याब्दिकं ददौ ॥ १६९ ॥

---

१ कुत्सितः पुरुषः कापुरुषस्तस्य योग्यम् । २ वार्षिकम् ।

दिष्ट्या मातस्त्वमायासीः किमागमनकारणम् । आहूतोऽप्यहमायामि सद्यो युष्माकमाज्ञया ॥ १४० ॥
उवाच त्रिशलादेवी सदने नस्त्वमागमः । अस्मत्पुण्यैर्न खल्वल्पैरनल्पोदयकारणम् ॥ १४१ ॥
भवन्तं वीक्षमाणानां न तृप्तिर्जगतामपि । त्वद्दर्शनमहाव्यसनानां किमङ्ग[1] नः ॥ १४२ ॥
जानीमश्च सदैवेदमस्माकमनुकंपया । भववासविरक्तोऽपि गृहवासेऽत्र तिष्ठसि ॥ १४३ ॥
अकार्षीर्दुष्करमिदं स्वमनोवृत्तिबाधया । एतावता न तृप्यामो वयं ते विनयालय[2] ॥ १४४ ॥
वधूयुक्तं यथाद्य त्वां पश्यामस्त्वं तथा कुरु । राजपुत्रीं यशोदाख्यां समायातां समुद्वह ॥ १४५ ॥
उत्कंठितस्ते पितापि त्वद्विवाहोत्सवेक्षणे । कुरुष्व दुष्करमदोऽप्यावयोरुपरोधतः ॥ १४६ ॥
भगवानप्यथो दध्यौ किमापतितमद्य मे । साग्रहेयमितो[3] माता भवभ्रमणभीरितः[4] ॥ १४७ ॥
गर्भेऽपि संवृताङ्गोऽस्थां मातृदुःखाभिशंकया । स्थास्यामि गृहवासेऽपि तन्मनोवृत्तिबाधया ॥ १४८ ॥
कर्म भोगफलं चास्ति मान्यौ च पितरौ मम । एवं विचिन्त्य भगवांस्तन्मेने मातृशासनम् ॥ १४९ ॥
गत्वा च त्रिशलादेवी स्वयं सिद्धार्थभूभुजे । विवाहानुमतिं सूनोराचचक्षे प्रमोदभाक् ॥ १५० ॥
पुण्येऽहनि महीनाथो जन्मोत्सवसमोत्सवम् । विवाहं कारयामास महावीरयशोदयोः ॥ १५१ ॥
त्रिशलासिद्धार्थराजौ तत्पश्यन्तौ वधूवरम् । धन्यंमन्यौ मुमुदाते पीतामृतरसाविव ॥ १५२ ॥
समं यशोदया देव्या स्वामी वैषयिकं सुखम् । अनासक्तोऽनुबभूव पित्रोर्नेत्रनिशाकरः ॥ १५३ ॥
कालेन गच्छता भर्तुर्यशोदायामजायत । नामतो रूपतश्चापि दुहिता प्रियदर्शना ॥ १५४ ॥

---

१ अङ्ग इति कोमलामंत्रणे । २ विनयस्यालयः स्थानं तत्संबुद्धौ । ३ आग्रहसहिता । ४ भवभ्रमणभयम् ।

राजा समरवीरोऽथ यशोदां कन्यकां निजाम् । प्रदातुं वर्धमानाय प्राहिणोन्मंत्रिभिः सह ॥ १२५ ॥
ते मंत्रिणोऽथ सिद्धार्थं नत्वोचुर्नः क्ष्मापतिः । प्रदातुं वर्धमानाय यशोदां प्राहिणोत्सुताम् ॥ १२६ ॥
अग्रेऽपि भवतो भृत्योऽस्मत्स्वामी स विशेषतः । सम्बन्धेनामुना भूयात् प्रसीदानुगृहाण नः ॥ १२७ ॥
ऊचे सिद्धार्थराजोऽपि त्रिशलाया ममापि च । मनोरथो भृशमस्ति कुमारोऽद्वाहलक्षणः ॥ १२८ ॥
परं कुमारः संसारविरक्तो जन्मतोऽपि हि । न शक्यते वक्तुमपि विवाहादिप्रयोजने ॥ १२९ ॥
तथापि ह्युपरोधाद्वस्तत्तद्वचनभंगिभिः । ब्रूमस्तन्मित्रमुखेन विवाहायाद्य नन्दनम् ॥ १३० ॥
इत्युक्त्वा त्रिशलादेवीमापृच्छ्य च महीपतिः । प्रैषीदुपवर्धमानं तद्वयस्यान्[१] महामतीन् ॥ १३१ ॥
तेऽपि गत्वा सविनयं नमस्कृत्याचचक्षिरे । वर्धमानकुमाराय सिद्धार्थनृपशासनम् ॥ १३२ ॥
भगवानप्युवाचैवं यूयं मदनुगा इति । मम भावं तु जानीथ गृहवासपराङ्मुखम् ॥ १३३ ॥
तेऽप्यूचुस्त्वां भवोद्विग्नं मन्महे सर्वदापि हि । आज्ञा पित्रोरलंघ्या ते विघ्नः परमदोऽपि च ॥ १३४ ॥
किं च नः प्रणययाञ्चां कदाचिन्नावमन्यसे । कथमेकपदे सर्वानस्मानद्यावमन्यसे ॥ १३५ ॥
अथो बभाषे भगवान्मूढाः को वोऽयमादरः । परिग्रहो हि दारादेर्भवभ्रमणकारणम् ॥ १३६ ॥
मा स्म भूज्जीवतोर्दुःखं मत्पित्रोर्मद्वियोगजम् । इति हेतोर्नाधुनैव प्रव्रजाम्युत्सुकोऽपि हि ॥ १३७ ॥
एवं प्रभौ भाषमाणे विवाहाय नृपाज्ञया । स्वामिनी त्रिशलादेवी स्वयं तत्र समाययौ ॥ १३८ ॥
अभ्युत्तस्थौ जगन्नाथो गौरवेण स्वमातरम् । रत्नसिंहासने चोच्चैरासयित्वेत्युवाच च ॥ १३९ ॥

---

१ तस्य मित्राणि ।

जिग्ये भगवता तत्र कृतश्चासीदयं पणः। जयेद्य इह स ह्यन्यान् पृष्ठमारुह्य वाहयेत् ॥ १११ ॥
आरुह्यावाहयद्बाहानिव वीरः कुमारकान्। आरुरोह सुरस्यापि पृष्ठं प्रष्ठो महौजसाम् ॥ ११२ ॥
ततः कैरालं वेतालरूपमाधाय दुष्टधीः। भूधरानप्यधरयन् प्रारब्धो वर्धितुं सुरः ॥ ११३ ॥
पातालकल्पे तस्यास्ये जिह्वया तैक्षकायितम्। पिंगैस्तुंगे शिरःशैले केशैर्दावानलायितम् ॥ ११४ ॥
तस्यातिदारुणे दंष्ट्रे अभूतां क्रैकचाकृती। जाज्वल्यमाने अङ्गारशकट्याविव लोचने ॥ ११५ ॥
घोणारंध्रे महाघोरे महीधरगुहे इव। भृकुटीभंगुरे भीमे महोरग्याविव भ्रुवौ ॥ ११६ ॥
स व्यरंसीद्वर्धनान्न यावत्तावन्महौजसा। आहत्य मुष्टिना पृष्ठे स्वामिना वामनीकृतः ॥ ११७ ॥
एवं च भगवद्धैर्यं साक्षात्कृत्येन्द्रवर्णितम्। प्रभुं नत्वात्मरूपेण निजं धाम जगाम सः ॥ ११८ ॥
पित्रा साग्राष्टवर्षस्यारब्धेऽथाध्यापने प्रभोः। सिंहासनं क्षणेनापि कंपते स्म बिर्डौजसः ॥ ११९ ॥
अवधिज्ञानतो ज्ञात्वा पित्रोरार्जवमद्भुतम्। आः सर्वज्ञस्य शिष्यत्वमितीन्द्रस्तमुपास्थित ॥ १२० ॥
उपाध्यायासने तस्मिन् वासवेनोपवेशितः। प्रणम्य प्रार्थितः स्वामी शैब्दपारायणं जगौ ॥ १२१ ॥
इदं भगवतेन्द्राय प्रोक्तं शब्दानुशासनम्। उपाध्यायेन तच्छ्रुत्वा लोकेष्वैन्द्रमितीरितम् ॥ १२२ ॥
सप्तहस्तोच्छ्रितवपुः क्रमात्प्राप च यौवनम्। वनद्विप इव स्वामी लीलागमनभूषणः ॥ १२३ ॥
रूपं जगत्त्रयोत्कृष्टं प्रभुत्वं त्रिजगत्यपि। यौवनं च नवं भर्तुर्विकारोऽभूत्तथापि न ॥ १२४ ॥

१ अश्वान्। २ भयंकरम्। ३ मुखे। ४ तक्षको नागविशेषस्तद्वदाचरितम्। ५ करपत्राकृती। ६ नासिकारंध्रे। ७ अवामनो वामनः कृतः 'च्विः'। ८ इन्द्रस्य। ९ व्याकरणम्।

सिद्धार्थस्तानुवाचैवं गर्भस्थेऽस्मिन् सुते मम । गृहे पुरे मंडले च व्यवर्धिष्ट धनादिकम् ॥ ९८ ॥
वर्धमान इत्यभिख्या सूनोरस्य तदस्तु भोः । प्रत्यभाषि प्रमुदितैरेवमस्त्विति तैरपि ॥ ९९ ॥

॥ युग्मम् ॥

महोपसर्गैरप्येष न कंप्य इति वज्रिणा । महावीर इत्यपरं नाम चक्रे जगत्पतेः ॥ १०० ॥
सोऽहंपूर्विकया[1] भक्तैः सेव्यमानः सुरासुरैः । दृशा पीयूषवर्षिण्या सिञ्चन्निव वसुन्धराम् ॥ १०१ ॥
अष्टोत्तरसहस्रेण लक्षणैरुपलक्षितः । निसर्गेण गुणैर्वृद्धो वयसा ववृधे क्रमात् ॥ १०२ ॥
राजपुत्रैः सवयोभिः समं न्यूनाष्टवत्सरः । वयोऽनुरूपक्रीडाभिः सोऽन्यदा क्रीडितुं ययौ ॥ १०३ ॥
तदा ज्ञात्वावधिज्ञानान्मध्येसुरसभं[2] हरिः । धीरा अनुमहावीरमिति[3] वीरमवर्णयत् ॥ १०४ ॥
क्षोभयिष्यामि तं वीरमेषोऽहमिति मत्सरी[4] । आजगामामरः कोऽपि यत्र क्रीडन्नभूद्विभुः ॥ १०५ ॥
कुर्वत्यामलकीं क्रीडां राजपुत्रैः सह प्रभौ । सोऽधस्तस्थौ विटपिनो भुजगीभूय मायया ॥ १०६ ॥
तत्कालं राजपुत्रेषु वित्रस्तेषु दिशो दिशि । स्मित्वा रज्जुमिवोत्क्षिप्य तं चिक्षेप क्षितौ विभुः ॥ १०७ ॥
सभीकाः क्रीडितुं तत्र कुमाराः पुनराययुः । कुमारीभूय सोऽप्यागात् सर्वेऽप्यारुरुहुस्तरुम् ॥ १०८ ॥
पादपाग्रं कुमारेभ्यः प्राप प्रथमतः प्रभुः । यद्वा कियदिदं तस्य यो लोकाग्रं गमिष्यति ॥ १०९ ॥
शुशुभे भगवांस्तत्र मेरुशृंग इवार्यमा[5] । लंबमाना बभुः शाखास्वन्ये शाखामृगा[6] इव ॥ ११० ॥

---

१ अहं पूर्वोऽहं पूर्व इति यस्यां क्रियायां साहंपूर्विका तया । २ सुराणां सभायामध्ये । ३ महावीराद्धीना अनुमहावीरमिति हीनार्थेऽव्ययीभावः । ४ गर्ववान् । ५ सूर्यः । ६ वानराः ।

नमः कालत्रयज्ञाय जिनेन्द्राय स्वयंभुवे । ज्ञानबलवीर्यतेजःशक्त्यैश्वर्यमयाय ते ॥ ८५ ॥
आदिपुंसे नमस्तुभ्यं नमस्ते परमेष्ठिने । नमस्तुभ्यं महेशाय ज्योतिस्तत्त्वाय ते नमः ॥ ८६ ॥
तुभ्यं सिद्धार्थराजेन्द्रकुलक्षीरोदधीन्दवे । महावीराय धीराय त्रिजगत्स्वामिने नमः ॥ ८७ ॥
इति स्तुत्वा गृहीत्वेशं मातुः पार्श्वे निधाय च । संहृत्य तत्प्रतिबिंबमवस्वापनिकामपि ॥ ८८ ॥
निधायोच्छीर्षके क्षौमं कुंडले चोपरि प्रभोः । श्रीदामगंडुकं शक्रः कृत्वा चागात्स्वमाश्रयम् ॥ ८९ ॥
॥ युग्मम् ॥

तदेन्द्रादिष्टधनदप्रेरिता जृंभकामराः । ववृषुः स्वर्णमाणिक्यवसुधारा नृपौकसि ॥ ९० ॥
कारान्योऽमोचयजान्तून् सूनोर्जन्मोत्सवे नृपः । अर्हज्जन्म हि मोक्षाय भवभाजां भवादपि ॥ ९१ ॥
तृतीये दिवसे सूनोश्चंद्रमार्तंडबिंबयोः । दर्शनं पितरौ प्रीतौ कारयामासतुः स्वयम् ॥ ९२ ॥
षष्ठेऽहन्यविधवाभिः कलमंगलगीतिभिः । सकुंकुमांगरागाभिरनल्पाकल्पचारुभिः ॥ ९३ ॥
कंठालंबितमाल्याभिः कुलस्त्रीभिरनेकशः । राजा राज्ञी चाकृषातां रात्रिजागरणोत्सवम् ॥ ९४ ॥
॥ युग्मम् ॥

सिद्धार्थत्रिशलादेव्यौ प्राप्त एकादशे दिने । निवर्तयामासतुश्च जातकर्ममहोत्सवम् ॥ ९५ ॥
दिने तु द्वादशे राजा सिद्धार्थः सिद्धवांछितः । आजूहवत्समस्तान्स्वाञ्ज्ञातिसंबन्धबान्धवान् ॥ ९६ ॥
मांगल्योपायनकरान् सच्चक्रे तान्महीपतिः । यथोचितप्रतिदानव्यवहारपरो हि सः ॥ ९७ ॥

---

१ इन्दुश्चन्द्रः । २ अनल्पभूषणैश्चारुभिः ।

नमो लोकप्रदीपाय लोकप्रद्योतकारिणे । लोकोत्तमाय लोकाधीशाय लोकहिताय ते ॥ ७२ ॥
नमस्ते पुरुषवरपुंडरीकाय शंभवे । पुरुषसिंहाय [1]पुरुषैकगन्धद्विपाय ते ॥ ७३ ॥
चक्षुर्दायाऽभयदाय बोधिदायाध्वदायिने । धर्मदाय [2]धर्मदेष्ट्रे नमः शरणदायिने ॥ ७४ ॥
धर्मसारथये धर्मनेत्रे धर्मैकचक्रिणे । व्यावृत्तछद्मने सम्यग्ज्ञानदर्शनधारिणे ॥ ७५ ॥
[3]जिनाय ते [4]जापकाय तीर्णाय तारकाय च । विमुक्ताय मोचकाय नमो बुद्धाय बोधिने ॥ ७६ ॥
सर्वज्ञाय नमस्तुभ्यं स्वामिने सर्वदर्शिने । सर्वातिशयपात्राय कर्माष्टकनिषूदिने ॥ ७७ ॥
तुभ्यं क्षेत्राय पात्राय तीर्थाय परमात्मने । स्याद्वादवादिने वीतरागाय मुनये नमः ॥ ७८ ॥
पूज्यानामपि पूज्याय महद्भ्योऽपि महीयसे । आचार्याणामाचार्याय ज्येष्ठानां ज्यायसे नमः ॥ ७९ ॥
नमो विश्वंभुवे तुभ्यं योगिनाथाय योगिने । पावनाय पवित्राया[5]नुत्तरायोत्तराय च ॥ ८० ॥
[6]संप्रक्षालनाय योगाचार्याय [7]प्रवराय च । [8]अग्र्याय वाचस्पतये मांगल्याय नमोऽस्तुते ॥ ८१ ॥
नमः परस्तादुदितायैकवीराय शाश्वते । ॐभूर्भुवःस्वरितिवाक्स्तवनीयाय ते नमः ॥ ८२ ॥
नमः [9]सर्वजनीनाय सर्वार्थायामृताय च । उदितब्रह्मचर्यायाप्ताय पारंगताय ते ॥ ८३ ॥
नमस्ते दक्षिणीयाय निर्विकाराय तायिने । वज्रऋषभनाराचवपुषे [10]तत्त्वदृश्वने ॥ ८४ ॥

---

१ पुरुषेषु अद्वितीयगन्धहस्तिरूपाय । २ धर्मनायकाय । ३ जयति रागादीनिति जिनस्तस्मै । ४ जापयति रागादीनिति जापकस्तस्मै । ५ नास्ति उत्तर उत्तमो यस्मात्तस्मै । ६ सम्यक् प्रक्षालयति पापानीति तथा तस्मै । ७ श्रेष्ठाय । ८ प्रथमाय । ९ सर्वजनहिताय । १० तत्त्वानि पश्यतीति तत्त्वदृश्वा तस्मै ।

## ॥ तृतीयः सर्गः ॥

ततश्च त्रिजगन्नाथः सोदर्यं नन्दिवर्धनम् । आपप्रच्छेऽन्यतो गन्तुं ज्ञातवंश्यान् परानपि ॥ १ ॥
चारित्ररथमारूढं विहारप्रस्थितं प्रभुम् । वृद्धः पितृसुहृद्विप्रः सोमो नत्वेत्यभाषत ॥ २ ॥
स्वामिन् संवत्सरदानमदाः स्वान्यानपेक्षया[1] । अदरिद्रं जगज्जज्ञे विना मां मन्दभाग्यकम् ॥ ३ ॥
अहं हि जन्मतो नाथ महादारिद्र्यविद्रुतः । परान् प्रार्थयितुं ग्रामाद्ग्रामं भ्राम्याम्यहर्निशम् ॥ ४ ॥
सहे निर्भर्त्सनं क्वापि ग्रीवायां ग्रहणं क्वचित् । क्वचिदप्युत्तरादानं[2] मुखमोटनकं क्वचित् ॥ ५ ॥
धनाशया तदाप्युच्चैर्बहिर्भ्रमत एव मे । अजानतो वात्सरिकं त्वद्दानं निष्फलं गतम् ॥ ६ ॥
संप्रत्यपि कृपां कुर्वन् जगन्नाथ प्रयच्छ मे । निर्भर्त्स्य प्रेषितः पत्न्या स्वामिन्नस्मि त्वदन्तिके ॥ ७ ॥
स्वाम्यप्युवाच कारुण्यात्त्यक्तसंगोऽस्मि संप्रति । तथाप्यंसस्थितस्यास्य वाससो[3]ऽर्धं गृहाण भोः ॥ ८ ॥
सोऽपि वासोऽर्धमादाय हृष्टो निजगृहं ययौ । दशाबन्धकृते तुन्नवाय[4]स्यादर्शयच्च तत् ॥ ९ ॥
त्वया क्वेदं प्राप्तमिति तुन्नवायेन भाषितः । शशंस श्रीमहावीरादवाप्तमिति स द्विजः ॥ १० ॥
बभाषे तुन्नवायस्तं द्वितीयमपि वाससः । अस्यार्धमानय मुनेस्तस्यानुपदमभ्यट ॥ ११ ॥
मुनेः पर्यटतस्तस्य लगित्वा कंटकादिषु । तत्पतिष्यति वासोऽर्धं सोऽनीहो[5] न ग्रहीष्यति ॥ १२ ॥
तदादायात्रानयेस्त्वं योजयित्वा दले उभे । अहं पूर्णीकरिष्यामि शुक्लपक्ष इवोडुपम् ॥ १३ ॥

---

१ स्वश्च स्वकीयोऽन्यश्च परकीयस्तयोरनपेक्षया । २ उत्तरस्यादानम् । ३ वस्त्रस्य । ४ वस्त्रसंधानकस्य । ५ इच्छारहितः ।

दीनारलक्षं मूल्येऽस्य भविष्यति विभज्य तत् । अर्धमर्धं ग्रहीष्यावो भ्रातरौ सोदराविव ॥ १४ ॥
ओमित्युक्त्वा प्रभुमगात् स द्विजः प्रभुरप्यथ । ईर्यासमितिमान् सायं कूर्मारग्राममासदत् ॥ १५ ॥
नासाग्रन्यस्तनयनः प्रलंबितभुजद्वयः । प्रभुः प्रतिमया तत्र तस्थौ स्थाणुरिव स्थिरः ॥ १६ ॥
तदा च गोपः कोऽप्येको वाहयित्वा दिनं वृषान् । ग्रामसीमन्युपस्वामि प्राप्त एवमचिन्तयत् ॥ १७ ॥
अत्रैव मे चरन्त्वेते वृषभा ग्रामसीमनि । अहं करिष्ये ग्रामान्तर्गत्वा दोहं पुनर्गवाम् ॥ १८ ॥
ध्यात्वैवं सोऽविशद्ग्रामं चरन्तस्तद्वृषाः पुनः । अटवीं विविशुर्गोपं विना तिष्ठन्ति ते न हि ॥ १९ ॥
स ग्रामात्त्वागतो गोपो मम क्व वृषभा इति । पप्रच्छ स्वामिनं स्वाम्यप्यवोचन्न हि किंचन ॥ २० ॥
तूष्णीके तु प्रभौ नैष किंचिद्वेत्तीति चिन्तयन् । वने मृगयमाणः स्वान् गोपोऽतीयाय तां निशाम् २१
भ्रान्त्वा तेऽपि बलीवर्दाः पुनरेयुरुपप्रभु । निषद्य तस्थू रोमन्थायमानाः स्वस्थचेतसः ॥ २२ ॥
भ्रान्त्वा सोऽप्यागतो गोपो वृषान् दृष्ट्वेत्यचिन्तयत् । प्रभाते नेतुकामेन नूनं गावोऽमुना हृताः ॥ २३ ॥
एवं विचिन्त्य रभसा समुत्पाट्य च दामनीम् । प्रभुं हन्तुमधाविष्ट सकोपो गोपपांसनः ॥ २४ ॥
तदा चाचिन्तयच्छक्रः किं स्वामी प्रथमेऽहनि । विदधातीत्यथापश्यत्तं गोपं हन्तुमुद्यतम् ॥ २५ ॥
स्तंभयित्वाथ तं शक्रस्तत्रैत्यैवमतर्जयत् । किं नामुं वेत्सि रे पाप सिद्धार्थनृपनन्दनम् ॥ २६ ॥
ततः प्रदक्षिणीकृत्य त्रिर्मूर्ध्ना प्रणिपत्य च । इति विज्ञपयाञ्चक्रे प्रभुः प्राचीनबर्हिषा ॥ २७ ॥
भविष्यति द्वादशाब्दान्युपसर्गपरंपरा । तां निषेधितुमिच्छामि भूत्वाहं पारिपार्श्वकः ॥ २८ ॥

१ स्वामिसमीपम् । २ मूके । ३ वृषान् । ४ अतिचक्राम । ५ बन्धनरज्जुम् । ६ अधमगोपः । ७ इन्द्रेण ।

॥ १९ ॥

शत्रौ मित्रे तृणे स्त्रैणे स्वर्णेऽश्मनि मणौ मृदि । इहामुत्र सुखे दुःखे भवे मोक्षे समाशयः ॥ ४३ ॥
निष्कारणैककारुण्यपरायणमनस्तया । मज्जद्भवोदधौ मुग्धमुद्दिधीर्षुरिदं जगत् ॥ ४४ ॥
प्रभुः प्रभञ्जन इवाप्रतिबद्धोऽब्धिमेखलाम् । नानाग्रामपुरारण्यां विजहार वसुन्धराम् ॥ ४५ ॥
॥ नवभिः कुलकम् ॥
दीक्षाक्षणे च यच्चक्रे विभोर्देवैर्विलेपनम् । भृंगास्तत्सौरभाकृष्टास्तमागत्योपदुद्रुवुः ॥ ४६ ॥
गन्धयुक्तिमयाचन्त ग्रामीणतरुणाः प्रभुम् । अंगसंगं तरुण्यस्तु स्मरज्वरभरौषधम् ॥ ४७ ॥
दीक्षादिनात् प्रभृत्येवं साग्रं मासचतुष्टयम् । उपसर्गाञ्जगन्नाथः सेहे गिरिरिव स्थिरः ॥ ४८ ॥
अन्यदा विहरन् स्वामी मोराके सन्निवेशने । ययौ दूइज्जन्तकाख्ये तापसव्रातसंकुले ॥ ४९ ॥
पितृमित्रं कुलपतिस्तत्र नाथमुपास्थितः । पूर्वाभ्यासात् स्वामिनापि तस्मिन् बाहुः प्रसारितः ॥ ५० ॥
प्रार्थितः कुलपतिना तत्रैकामवसन्निशाम् । प्रतिमयैकरात्रिक्या श्रीमान् सिद्धार्थनन्दनः ॥ ५१ ॥
विजिहीर्षुं भगवन्तमूचे कुलपतिः प्रगे । वर्षाकालस्त्वया कार्यो विविक्तवसताविह ॥ ५२ ॥
नीरागोऽपि वचस्तस्य प्रतिश्रुत्योपरोधतः । निरञ्जनः शंख इव प्रययौ प्रभुरन्यतः ॥ ५३ ॥
वायुरिवाप्रतिबद्धो निर्लेपः पद्मपत्रवत् । सर्वत्र विहरन् ग्रीष्मकालं स्वाम्यत्यवाहयत् ॥ ५४ ॥
सिद्धार्थसुहृदस्तस्य स्मरन् कुलपतेर्वचः । स्वामी प्रावृषमत्येतुं मोराकं पुनरभ्यगात् ॥ ५५ ॥

१ पाषाणे । २ उद्धर्तुमिच्छुः । ३ वायुः । ४ भ्रमराः । ५ व्रातः समूहः । ६ विहर्तुमिच्छुम् । ७ प्रातःकाले । ८ एकान्तस्थाने । ९ अंगीकृत्य ।

वर्षत्युज्ज्जितं मेघेऽखंडधारागृहोपमे । स्वस्वस्थानाय गच्छत्सु पथिकेष्वपि हंसवत् ॥ ५६ ॥
प्रभोर्भ्रातृव्यतास्नेहसम्बन्धमधुराशयः । गृहमेकं कुलपतिस्तृणाच्छादितमार्पयत् ॥ ५७ ॥

॥ युग्मम् ॥

आजानुलम्बितभुजो जटावानिव पादपः । नियंत्रितमनास्तत्र तस्थौ प्रतिमया प्रभुः ॥ ५८ ॥
भीष्मग्रीष्मर्तुमाहात्म्यान्निःशेषिततृणे वने । अनुद्यन्नूतनतृणे[1] नवत्वात्प्रावृषोऽपि च ॥ ५९ ॥
अधावन् खादितुं गावस्तापसानां तृणोटजान् । निर्दयास्तापसास्ते गास्ता यष्टिभिरताडयन् ॥ ६० ॥

॥ युग्मम् ॥

तैस्ताड्यमाना गावस्तास्तृणौकः[2] स्वाम्यधिष्ठितम् । चखादुः स्तंभनिभृते[3] प्रभौ तासां कुतो हि भीः ॥६१॥
तापसा अपि तत्प्रेक्ष्याक्रुध्यन्नेवं प्रभुं प्रति । रक्षामो वयमुटजान् स्वं न रक्षत्यसौ पुनः ॥ ६२ ॥
अहो कुलपतेः कोऽयमतिथिर्यस्य पश्यतः । चखादुर्गाव उटजमहो स्वार्थैकनिष्ठता ॥ ६३ ॥
किं कुर्महे स्वे[4] आत्मेव प्रियः कुलपतेरयम् । तद्भयादेव परुषं न वक्तुमिह शक्यते ॥ ६४ ॥
तापसास्तेऽन्यदा नाथे प्ररूढप्रौढमत्सराः । गत्वा कुलपतेः पार्श्वे सोपालंभमदोऽवदन् ॥ ६५ ॥
आश्रमे श्रमणः कोऽयमानीतो निर्ममस्त्वया । उटजस्यापि नाशोऽभूद्यदस्मिन्निह[5] तस्थुषि ॥ ६६ ॥
अकृतज्ञ उदासीनो निर्दाक्षिण्योऽलसश्च सः । गोभ्योऽपि रक्षति न यः खाद्यमानं स्वमाश्रमम् ॥ ६७ ॥

---

१ अनुत्पन्नानि नवतृणानि यस्मिंस्तस्मिन् । २ तृणगृहम् । ३ स्तंभवन्निश्चले । ४ आत्मीयः । ५ अस्मिन् श्रमणे तस्थुषि स्थिते सति ।

मुनिंमन्यो[1]ऽथवा नैष गा रक्षति समत्वभृत् । गुरुदेवार्चकास्तत्किं वयं न मुनयो मुने ॥ ६८ ॥
ततः कुलपतिरगात्तपनाथं ददर्श च । कृत्तपक्षं खगमिव छदिवर्जितमाश्रमम् ॥ ६९ ॥
निर्मत्सराः सत्यगिरस्तापसा इति चिन्तयन् । स नाथमूचे किं तात त्रातो[2]ऽयं नोटजस्त्वया ॥ ७० ॥
त्वत्पित्रा रक्षिताः सर्वे यावज्जीवं किलाश्रमाः । दुष्टशासनरूपं हि तवापि व्रतमर्हति ॥ ७१ ॥
आत्मानमिव रक्षन्ति स्वं नीडं नीडजा[3] अपि । विवेकिना त्वया हन्त किमाश्रम उपेक्षितः ॥ ७२ ॥
स्वविवेकोचितां शिक्षां[4] स दत्वा जीर्णतापसः[5] । स्वमाश्रमं ययौ भूयः स्मरन् सिद्धार्थसौहृदम् ॥ ७३ ॥
दध्यौ चैवं विभुरेषामप्रीतिर्मन्निबन्धना[6] । तदत्र स्थातुमुचितं न मे सर्वहितैषिणः ॥ ७४ ॥
एवं च चिन्तयन् स्वामी वैराग्यमधिकं दधत् । अभिग्रहानिमान् पञ्च जग्राह करुणानिधिः ॥ ७५ ॥
नैवाप्रीतिमतो गेहे वसनीयं कदाचन । स्थातव्यं च शरीरेण कायोत्सर्गजुषा सदा ॥ ७६ ॥
स्थेयं मौनेन च प्रायो भोक्तव्यं पाणिभाजने[7] । गृहस्थस्य च विनयो न कार्य इति पञ्च ते ॥ ७७ ॥
अभिग्रहान् गृहीत्वामूनर्धमासादनन्तरम् । ग्रामं नाम्नास्थिकग्रामं ययौ प्रावृष्यपि प्रभुः ॥ ७८ ॥
तत्र चैकस्य यक्षस्य शूलपाणेर्निकेतने । अधिवस्तुं जगन्नाथो ग्रामीणानन्वजिज्ञपत् ॥ ७९ ॥
ऊचुर्ग्राम्या न यक्षोऽयं वस्तुं दत्तेऽत्र कस्यचित् । यक्षस्यामुष्य हि कथा महती सा निशम्यताम् ॥ ८० ॥
ग्रामोऽयमभवत्पूर्वं वर्धमानोऽभिधानतः । नद्यस्ति वेगवत्यत्र पंकिलोभयकूलभूः ॥ ८१ ॥

---

१ आत्मानं मुनिं मन्यत इति तथा । २ रक्षितः । ३ पक्षिणः । ४ उपदेशम् । ५ वृद्धतापसः । ६ अहमेव निवन्धनं कारण यस्याः सा । ७ हस्त एव भाजन पात्रं तस्मिन् ।

तत्र भांडभृतैरागादनसां[1] पञ्चभिः शतैः । धनदेवो वणिक् तस्य चाभूदेको महावृषः ॥ ८२ ॥
तं महोक्षं धुरि कृत्वा सर्वाणि शकटानि सः । नद्या उत्तारयामास विषमाया अपि क्षणात् ॥ ८३ ॥
अतिभाराकर्षणेन मुखेन रुधिरं वमन् । स महोक्षः पपातोर्व्यां तेजवाजीव[2] सात्त्विकः[3] ॥ ८४ ॥
संभूय च वणिग्ग्राम्यानुवाच वृषसाक्षिकम् । पाल्योऽयं वृषभो न्यासीकृतजीवितवन्मम ॥ ८५ ॥
वृषस्य तृणपानीयनिमित्तं च धनं बहु । ग्राम्याणामर्पयामास स्वामिधर्मो ह्ययं खलु ॥ ८६ ॥
ततो वणिक् स्वयमपि चारिपानीयढौकनात् । प्रियाकृत्य[4] महोक्षाय सास्रदृक्[5] परतो[6] ययौ ॥ ८७ ॥
धनमादाय ते ग्राम्यास्तृणवार्यादिना वृषम् । प्रतिचक्रुर्न तं पापाः कुवैद्या इव रोगिणम् ॥ ८८ ॥
संजातहृदयक्रोटः क्षुत्पिपासाकदर्थितः । चर्मकीकस[7]मात्रांगः स गौरेवमचिन्तयत् ॥ ८९ ॥
अहो निष्करुणो ग्रामः पापिष्ठो निष्ठुराशयः । चांडालनिर्विशेषोऽयमशेषोऽप्यतिवञ्चकः ॥ ९० ॥
दूरे स्वयं करुणया दीनस्य मम पालनम् । मत्स्वामिदत्तमप्येभिर्जग्धं[8] चार्यादिवेतनम्[9] ॥ ९१ ॥
क्रुद्धोऽकामनिर्जरावान् स गौर्मृत्वोदपद्यत । व्यन्तरः शूलपाण्याख्यो ग्रामेऽत्रैव पुरातने ॥ ९२ ॥
सोऽथाज्ञासीद्विभंगेन पूर्वजन्मकथां निजाम् । ददर्श गोवपुस्तच्च ग्रामायास्मै चुकोप च ॥ ९३ ॥
व्यकार्षीद्व्यंतरो मारिं स मारेरिव दैवतम् । मार्यमाणैरमी ग्राम्यैरभूवन्नस्थिसंचयाः ॥ ९४ ॥
अपृच्छंश्चातुरा ग्राम्या मुहुर्ज्योतिर्विदादिकान् । चक्रुः शान्त्यै तदाज्ञां च वैद्याज्ञामिव रोगिणः ॥ ९५ ॥

---

१ शकटानाम् । २ अश्वविशेषः । ३ सत्त्वगुणी । ४ प्रियं कृत्वा । ५ अश्रुसहितनेत्रः । ६ अन्यतः । ७ कीकसानि अस्थीनि । ८ भक्षितम् । ९ तृणादीनां द्रव्यम् ।

विदधुर्गृहदेवीनां स्नानपूजादिकं मुहुः । नोपशान्तिरभून्मारेस्तथापि हि मनागपि ॥ ९६ ॥
ग्रामान्तराण्ययुर्ग्राम्या व्यन्तरः स तु कोपनः । युवराजो यमस्येवामारयत्तांस्तथापि हि ॥ ९७ ॥
ग्राम्या व्यचिन्तयंश्चैवं कोऽप्यस्मान्निर्विरोधितः । देवो दैत्योऽथवा यक्षः क्षेत्रपालोऽपरोऽपि वा ॥ ९८ ॥
यामस्तत्रैव तद्ग्रामे तत्प्रसादनहेतवे । एवं विमृश्य ते भूयः संभूयेह समाययुः ॥ ९९ ॥
ते स्नाताः श्वेतवसना उत्तरासंगधारिणः । मुक्तकेशाश्चत्वरेषु त्रिकेषूद्यानभूमिषु ॥ १०० ॥
भूतगेहेष्वथान्यत्र क्षिपन्तः परितो बलिम् । ऊर्ध्वाननाः प्राञ्जलयो दीनास्या एवमूचिरे ॥ १०१ ॥
युग्मम् ॥
भोः सुरा असुरा यक्षरक्षःकिंपुरुषादयः । यत्प्रमादान्मदाद्वाग[1]स्तन्नः क्षाम्यन्तु सर्वथा ॥ १०२ ॥
कोपः प्रणामावधिको महतां हि महानपि । तत्प्रसीदतु यः कश्चिदस्त्यस्मान्निर्विरोधितः ॥ १०३ ॥
व्यन्तरः सोऽन्तरिक्षस्थोऽथाब्रवीद्रे दुराशयाः । लुब्धा लुब्धकसंकाशाः[2] क्षमणं कुरुताधुना ॥ १०४ ॥
तदानीं वृषभस्य क्षुत्तृषाक्रान्तस्य तस्य तु । वणिग्दत्तधनेनापि दत्तं नान्नस्तृणादि यत् ॥ १०५ ॥
स मृत्वा वृषभोऽभूवं शूलपाणिरहं सुरः । तेन वैरेण वः सर्वान्मारयामि स्मरन्तु तत् ॥ १०६ ॥
तच्छ्रुत्वा ते पुनस्तस्मै धूपोत्क्षेपणतत्पराः । लुठन्तो भूतले दीना भूयोऽप्येवं बभाषिरे ॥ १०७ ॥
अपराद्धमदोऽस्माभिस्तथापि क्षाम्य शाम्य च । शरणं त्वां प्रपन्नाः स्मो ह्यनन्यशरणा वयम् ॥ १०८ ॥
तद्वाचा व्यन्तरः किञ्चिदुपशान्तोऽब्रवीदिति । अमूनि मानुषास्थीनि पुञ्जीकुरुत[3] संप्रति ॥ १०९ ॥

१ आगोऽपराधः । २ लुब्धकसदृशाः । ३ समूहीकुरुत व्यन्तम् ।

तस्योपरि कुरुध्वं चायतनं तस्य चान्तरे । ममोद्रूपानुगतां मूर्तिं स्थापयतोच्चकैः ॥ ११० ॥
एवं कृते प्राणितं वः प्रदास्ये नान्यथा पुनः । तथैव तद्वचस्तेऽपि ग्राम्या विदधुरादृताः ॥ १११ ॥
पूजाकरं शूलपाणेरिन्द्रशर्माणमाख्यया । ग्रामः समादिशत्तस्मै कल्पितानल्पवेतनः[1] ॥ ११२ ॥
अत्रास्थिसंचयोऽस्तीति ग्रामोऽसावस्थिकाह्वयः । तदाप्रभृति लोकेऽभूद्वर्धमानाभिधोऽपि सन् ॥११३॥
श्रान्ताः कार्पटिका रात्रौ वसन्त्यायतनेऽत्र ये । तत्रात्रावेव तान् हन्ति शूलपाणिः कृतान्तवत् ॥११४॥
स्थित्वा लोको दिनं ह्यत्रेन्द्रशर्मा च तदर्चकः । सायं स्वसदने याति तद्वस्तुं तेऽत्र नोचितम् ॥ ११५ ॥
इत्युक्त्वा ते पृथगपि स्वामिने वसतिं ददुः । प्रतीयेष न तु स्वामी यक्षौकस्तत्त्वयाचत ॥ ११६ ॥
अथ ग्राम्यैरनुज्ञातो बोधार्हं व्यन्तरं विदन् । तदायतनैककोणे तस्थौ प्रतिमया प्रभुः ॥ ११७ ॥
सायं कृत्वा धूपवेलामिन्द्रशर्मा तदर्चकः । निःसार्य पथिकान् सर्वान् भगवन्तमदोऽवदत् ॥ ११८ ॥
अयि देवार्य निर्याहि त्वमप्यायतनादितः । अयं हि व्यन्तरः क्रूरो भावी ते निशि मृत्यवे ॥ ११९ ॥
तस्थौ च स्वामी तूष्णीको व्यन्तरः सोऽप्यचिन्तयत् । अहो मुमूर्षुः[2] कोऽप्येष ममायतनमागमत् १२०
ग्रामेण वार्यमाणोऽपि मुहुर्मत्पूजकेन च । दृसः कोयमिहावात्सीद्दर्पमस्य हरामि तत् ॥ १२१ ॥
देवार्चके ततो यातेऽस्तमिते[3] च दिवाकरे । कायोत्सर्गस्थिते नाथेऽट्टहासं व्यन्तरोऽकरोत् ॥ १२२ ॥
पुस्फोटेव नभोभांडं तुत्रोटेवोरुमंरूलम् । तेनाट्टहासशब्देनातिरौद्रेण प्रसर्पिणा ॥ १२३ ॥
ग्रामलोकोऽपि तं शब्दं श्रुत्वावोचत्परस्परम् । नूनं देवार्यकः सोऽद्य व्यन्तरेण निहन्यते ॥ १२४ ॥

१ कल्पित बहु वेतनं मूल्यद्रव्य येन सः । २ मर्तुमिच्छुः । ३ अस्तं गते ।

नाम्ना तत्रोत्पलः पार्श्वतीर्थसाधुवरस्तदा । परिव्राडष्टांगमहानिमित्तज्ञानपंडितः ॥ १२५ ॥
लोकादेवार्यवृत्तान्तं श्रुत्वाधादधृतिं हृदि । अपश्चिमस्तीर्थकरो मा स्म भूदिति शंकया ॥ १२६ ॥
॥ युग्मम् ॥

अट्टहासस्वरेणापि न चुक्षोभ यदा प्रभुः । हस्तिरूपं महाघोरं व्यन्तरो विचकार सः ॥ १२७ ॥
स्वामिना हस्तिरूपे चावज्ञाते सति निर्ममे । पिशाचरूपं सोऽप्युच्चै रोदसीमानदंभवत् ॥ १२८ ॥
तेनाप्यक्षुभिते नाथे सर्परूपं भयंकरम् । विचकार स दुष्टात्मा यमपाशायुधोपमम् ॥ १२९ ॥
प्रभुं स सर्पो दर्पान्धो भोगेनावेष्टयद्दृढम् । ददंश दशनैर्गाढममोघविषनिर्झरः ॥ १३० ॥
चक्रे सर्पे सुधाभूते भूतराट् सप्त वेदनाः । शिरोनेत्रश्रवोनासादन्तपृष्ठनखे प्रभोः ॥ १३१ ॥
एकापि वेदना मृत्युकारणं प्राकृते नरे । अधिसेहे तु ताः स्वामी सप्तापि युगपद्भवाः ॥ १३२ ॥
कृत्वा कृत्वेत्युपसर्गान्निर्विण्णो व्यन्तरः स तु । नत्वा विज्ञपयामास प्रभुमेवं कृताञ्जलिः ॥ १३३ ॥
मया दुरात्मना नाथ तव शक्तिमजानता । नितान्तमपराद्धं यत्तत्क्षमस्व दयानिधे ॥ १३४ ॥
तदा च सिद्धार्थसुरः स्वकार्यव्यग्रमानसः । स्वामिसान्निध्यविषयमस्मार्षीच्छक्रशासनम् ॥ १३५ ॥
साटोपमेत्य चेत्यूचे शूलपाणे सुराधम । अप्रार्थितप्रार्थक भोः किमेतद्भवता कृतम् ॥ १३६ ॥
तीर्थकरं भगवन्तं सिद्धार्थनृपनन्दनम् । जगत्रयस्यापि पूज्यं किं न जानासि दुर्मते ॥ १३७ ॥

---

१ चरमः । २ तिरस्कृते । ३ देहेन । ४ श्रवः श्रोत्रम् । ५ सामान्ये । ६ अप्रार्थितस्य मृत्योः प्रार्थक ।

यदि त्वच्चरितं शक्रः स्वामिभक्तोऽद्य वेत्स्यति । तदा तत्कुलिशधाराक्षोदपात्रीभविष्यसि ॥ १३८ ॥
शूलपाणिस्ततो भीत्या पश्चात्तापेन चाकुलः । पुनरङ्गमयत्नार्थं नान्यदौपयिकं तदा ॥ १३९ ॥
तं प्रशान्तं च सिद्धार्थः सानुकंपोऽन्यधादिदम् । अहो तत्त्वानभिज्ञोऽसि शृणु तत्त्वं यथातथम् १४०
वीतरागे देवबुद्धिर्गुरुबुद्धिश्च साधुषु । धर्मे जिनोदिते धर्मबुद्धिरित्यात्मसात् कुरु ॥ १४१ ॥
प्राणिष्वतः परं पीडां मा कार्षीरात्मनीव भोः । निन्देर्गर्हेश्च सर्वाणि पूर्वदुश्चरितानि च ॥ १४२ ॥
अप्येकदाचरितस्य हन्त तीव्रस्य कर्मणः । कोटाकोटिगुणं दुःखविपाकं जन्तुरश्नुते ॥ १४३ ॥
शूलपाणिस्तदाकर्ण्यानेकप्राणिद्रवयं कृतम् । स्मरन्मुहुर्निनिन्द स्वं पश्चात्तापाधिवासितः ॥ १४४ ॥
सम्यक्त्वभृद्भवोद्विग्नः सोऽर्चित्वा चरणौ प्रभोः । आगोमलक्षालनांभःसंगीतमुपचक्रमे ॥ १४५ ॥
तद्गीतशब्दमाकर्ण्य ग्राम्य एवमचिन्तयत् । मन्ये व्यापाद्य देवार्यं देवः क्रीडति संप्रति ॥ १४६ ॥
नाथोऽपि चतुरो यामान् किञ्चिदूनान् कदर्थितः । श्रमान्निद्रामधिगतोऽपश्यत् स्वप्नानमून् दश ॥१४७॥
वर्धिष्णुस्तालपिशाचः स्वयं व्यापादितः किल । कोकिलौ श्वेतचित्रौ च सेवमानौ स्वसन्निधौ ॥ १४८ ॥
दामद्वयं च गन्धाढ्यं गोवर्गः सेवनोद्यतः । पद्माचितं पद्मसरो दोर्भ्यां तीर्णश्च सागरः ॥ १४९ ॥
[3]उद्रश्मिकं चार्कबिंबमथाद्रिर्मानुषोत्तरः । निजांत्रैर्वेष्टितः स्वेनारूढं मेरुशिरोऽपि च ॥ १५० ॥
एवं प्रेक्ष्य दश स्वप्नान् प्राबुध्द त्रिजगद्गुरुः । उदियाय च मार्तंडो विवन्दिषुरिव प्रभुम् ॥ १५१ ॥

---

१ तस्य कुलिशस्य वज्रस्य धारया चूर्णपात्रीभविष्यसि त्वं । २ आत्माधीनम् । ३ उद्गधिका रश्मयः किरणा यस्य तत् । ४ सूर्यः ।

तदा चागाज्जनः सर्व इन्द्रशर्मोत्पलोऽपि च। अद्भुतांगं पूजितं च प्रभुं प्रेक्ष्य मुदं ययौ ॥ १५२ ॥
साश्चर्याः प्रभुमभ्यर्च्य पुष्पप्रभृतिभिश्च ते। सिंहनादं विदधिरे वीरा इव जिताहवाः[1] ॥ १५३ ॥
सिंहनादमुखास्ते तु परस्परमदोऽवदन्। देवार्येणाधुना दिष्ट्योपाशामि व्यन्तरश्चिरात् ॥ १५४ ॥
उत्पलोऽपि परिज्ञाय भगवन्तमवन्दत। निषसाद च तत्पादपद्मान्ते शिष्यलेशवत् ॥ १५५ ॥
कायोत्सर्गावसाने तु प्रभुं नत्वोत्पलः पुनः। ज्ञानसामर्थ्यतो ज्ञातप्रभुस्वप्नोऽब्रवीदिदम् ॥ १५६ ॥
स्वामिन्निशान्ते युष्माभिः सुस्वप्नाः प्रेक्षिता दश। तत्फलानि स्वयं वेत्सि भक्त्याख्यामि तथाप्यहम्१५७
हतस्तालपिशाचो यत्तन्मोहं निहनिष्यसि। यच्छ्वेतः कोकिलः शुक्लध्यानमारोक्ष्यसीश तत् ॥ १५८ ॥
यच्चित्रकोकिलस्तद्द्वादशांगीं प्रथयिष्यसि। गोवर्गो यत्तु तद्भावी संघस्तव चतुर्विधः ॥ १५९ ॥
यत्तु पद्मसरो देवनिकायः सेवकस्ततः। यत्तु सागरमुत्तीर्ण उत्तरिष्यसि तद्भवम् ॥ १६० ॥
यच्चार्कः केवलज्ञानं तत्समुत्पत्स्यते तव। यच्चान्त्रैर्वेष्टितोऽद्रिस्तत्सप्रतापं यशस्तव ॥ १६१ ॥
यन्मेरुशृंगमारूढस्त्वं तत्सिंहासनस्थितः। धर्मं देक्ष्यसि यद्दाम्नी[2] तयोर्वेद्मि फलं न हि ॥ १६२ ॥
अथाचचक्षे भगवान् दामद्वयफलं त्वदः। गृहस्थानां यतीनां च वक्ष्ये धर्मं द्विधापि हि ॥ १६३ ॥
अथ नत्वा जगन्नाथं ययौ स्वस्थानमुत्पलः। विस्मय[3]प्रमदोन्मुद्रमनसोऽथापरेऽप्ययुः ॥ १६४ ॥
तत्रार्धमासक्षपणैश्चतुर्मासीमतीत्य ताम्। निरगादस्थिकग्रामाद्विहर्तुं प्रभुरन्यतः ॥ १६५ ॥
अनुगच्छन् शूलपाणिः प्रभुं नत्वाभ्यधादिदम्। स्वसौख्यनिरपेक्षस्त्वमिहागा मेऽनुकंपया ॥ १६६ ॥

१ जित आहवो युद्धं यैस्ते। २ मालाद्वयम्। ३ विस्मयेन यः प्रमदो हर्षस्तेन प्रफुल्लचेतसः।

न पापो मत्समः कोऽपि यस्त्वय्यप्यपकारकृत् । न स्वार्य[1]स्त्वत्समः कोऽपि यो मय्यप्युपकारकृत् ॥१६७॥
अद्य यावदार्जयिष्यं कामहं नरकावनिम् । नाबोधयिष्यस्त्वं चेन्मां विश्वोपकृतिकर्मठ ॥ १६८ ॥
इत्युदित्वा भक्तिगर्भो भगवन्तं प्रणम्य च । शूलपाणिर्निववृते शान्तो द्विप इवामदः ॥ १६९ ॥
दीक्षादिनादतीतेऽब्दे मोराकं सन्निवेशनम् । गत्वा तद्बहिरुद्याने स्वाम्यस्थात् प्रतिमाधरः ॥ १७० ॥
तस्मिन्नच्छन्दको नाम पाखंडी सन्निवेशने । ज्योतिष्कमंत्रतंत्रादिकरणेन स्म जीवति ॥ १७१ ॥
तस्यासहिष्णुर्माहात्म्यं स्वाम्यर्चां चाभिलाषुकः । सिद्धार्थव्यन्तरः कृत्वा संक्रमं स्वामि[2]वर्ष्मणि ॥१७२॥
यान्तमाहूय गोपालमूचे भो भुक्तवानसि । कंगुकूरं ससौवीरं[3] वृषांस्त्रातुं च गच्छसि ॥ १७३ ॥
आगच्छंश्चाहिमद्राक्षीः स्वप्नेऽरोदीश्च निर्भरम् । तदेतत्संवदति किं सत्यमाख्याहि गोपक ॥ १७४ ॥
सत्यमेवेति तेनोक्ते सिद्धार्थस्तस्य भूरिशः । भूयस्तत्तत्समाचख्यौ प्रत्ययोत्पत्तिकारणम् ॥ १७५ ॥
गोपः सविस्मयो ग्रामे गत्वाख्यद्यद्बहिर्वने । देवार्योऽस्ति त्रिकालज्ञः सोऽपूरि प्रत्ययान्मम ॥ १७६ ॥
तच्छ्रुत्वा कौतुकापूर्णस्तूर्णं[4] ग्रामजनोऽखिलः । पुष्पाक्षतादिपूजाभृदाययौ स्वामिसन्निधौ ॥ १७७ ॥
सिद्धार्थः स्वामिसंक्रान्तो ग्रामीणानब्रवीदिदम् । द्रष्टुं मेऽतिशयं यूयं सर्वे स्थ किमिहागताः ॥ १७८ ॥
ग्राम्यैरामेत्यभिहिते यत्तैर्दृष्टं कृतं श्रुतम् । उक्तं च प्राक् तदानीं च सिद्धार्थस्तदचीकथत् ॥ १७९ ॥
सिद्धार्थो भावि चाचख्यौ श्रुत्वा लोकस्ततोऽकरोत् । प्रभोः पूजां वन्दनां च महामहिमपूर्वकम् ॥१८०॥

---

१ स्वार्यः सुष्ठु आर्यः पूजनीयः । २ स्वामिदेहे । ३ सौवीरं कांजीविशेषस्तेन सहितम् । ४ शीघ्रम् ।

एवं च प्रत्यहं लोकेष्वापतत्सु[1] पेतत्सु[2] च । सिद्धार्थव्यन्तरस्याभून्मनःप्रीतिर्गरीयसी ॥ १८१ ॥
ऊचुस्तत्रान्यदा ग्राम्याः स्वामिन्नच्छन्दकाभिधः । ग्रामे परिवसत्यस्मिन् सोऽपि वेत्ति भवानिव ॥१८२॥
सिद्धार्थस्तानभाषिष्ट न स जानाति किञ्चन । ऋजून्[3] प्रतार्य भवतः करोत्युदरपूरणम् ॥ १८३ ॥
ते गत्वाच्छन्दकं स्माहुर्न त्वं जानासि किञ्चन । सर्वं जानाति देवार्यो भावि भूतं भवच्च यत् ॥ १८४ ॥
स्वप्रतिष्ठाभ्रंशभीरुर्बभाषेऽच्छन्दकोऽप्यदः । स वः पुरो वेत्ति परं परमार्थमजानताम् ॥ १८५ ॥
पुरो मम यदि ज्ञाता मन्ये ज्ञाता तदा हि सः । गत्वा तस्याज्ञतामाविष्करोम्येषोऽद्य पश्यत ॥ १८६ ॥
इत्युक्त्वाच्छन्दकः क्रुद्धो वृतो ग्राम्यैः सकौतुकैः । कायोत्सर्गस्थितं नाथं द्रुतं द्रुतमुपाययौ ॥ १८७ ॥
करांगुलीभिः स तृणं गृहीत्वोभयपार्श्वयोः । ऊचे नाथं तृणमिदं किं मया छेत्स्यते न वा ॥ १८८ ॥
भावस्तस्याभवच्चायं देवार्यो यद्वदिष्यति । तत्प्रतीपं[4] करिष्यामि स्याद्यथानृत[5]वागसौ ॥ १८९ ॥
आचचक्षे च सिद्धार्थो न छेत्स्यत इदं तृणम् । अच्छन्दकोऽपि तच्छेत्तुमारेभे सज्जितांगुलिः ॥ १९० ॥
दध्यौ शक्रस्तदा स्वामी विहरत्यधुना कथम् । दत्तोपयोगश्चापश्यत्तदच्छन्दकचेष्टितम् ॥ १९१ ॥
मा भूत्स्वामिमुखोद्भीर्णा गीर[6]सत्येति वज्रभृत् । वज्रेण चिच्छेद दशाप्यच्छन्दककरांगुलीः ॥ १९२ ॥
वीडा[7]पन्नस्तृणाच्छेदाद्धस्यमानोऽखिलैर्जनैः । अच्छन्दकोऽन्यतोऽगच्छदुन्मत्त इव मूढधीः ॥ १९३ ॥
सिद्धार्थोऽथावदद्ग्राम्यांस्तस्करोऽच्छन्दको ह्ययम् । ग्राम्याः प्रत्यूचिरे स्वामिन् किं कस्यानेन चोरितम् १९४
सिद्धार्थोऽप्यब्रवीदत्र वीरघोषोऽस्ति कर्मकृत् । तच्छ्रुत्वा वीरघोषोऽपि प्रणम्य स्वमदर्शयत् ॥ १९५ ॥

१ आगच्छत्सु । २ गच्छत्सु । ३ सरलाशयान् । ४ अन्यथा । ५ अमत्यवाक् । ६ गीर्वाणी । ७ विस्मितः ।

आदिशेति च तेनोक्ते सिद्धार्थः पुनरभ्यधात् । भाजनं ते दशपलं नष्टपूर्वं निकेतनात् ॥ १९६ ॥
आमेत्युक्ते च घोषेण सिद्धार्थः स्माह तत्खलु । हृतं पार्श्वस्थितानेन प्रत्ययोऽत्र निरीक्ष्यताम् ॥ १९७ ॥
पश्चान्निजौकसः[1] प्राच्यां दिशि शिग्रुमहीरुहः । हस्तमात्रमधः क्षिप्तमस्ति गत्वा गृहाण तत् ॥ १९८ ॥
उत्कौतुकैर्वृतो लोकैर्वीरघोषस्तदालये । भाजनं तत्तथाख्यातं गृहीत्वा पुनरराययौ ॥ १९९ ॥
ग्राम्यानुत्तुमुलान् भूयः सिद्धार्थः प्रोचिवानिति । भूयोऽपि श्रूयतामिन्द्रशर्मेत्यत्रास्ति किं गृही ॥२००॥
अस्तीत्यभिदधे लोक इन्द्रशर्माप्युपस्थितः । आज्ञापयायमस्मीति वदन् प्राञ्जलिरग्रतः ॥ २०१ ॥
सिद्धार्थोऽभिदधे भद्र नष्टः किं ते पुरा हुडुः[3] । एवमेतदित्यवोचदिन्द्रशर्मा सविस्मयः ॥ २०२ ॥
सिद्धार्थः स्माह हत्वा स भक्षितो भिक्षुणामुना । बदर्या दक्षिणे पार्श्वेऽवकरे[4]ऽस्थीनि तस्य तु ॥२०३॥
लोकाश्च कौतुकाद्गत्वा तदस्थीनि व्यलोकयन् । सन्तीत्यभिदधानास्तु भूयस्तत्र समाययुः ॥ २०४ ॥
सिद्धार्थः पुनरप्यूचे तृतीयमपि चेष्टितम् । अस्यास्ति तदस्तु परं कथयिष्यामि न ह्यहम् ॥ २०५ ॥
आख्याहि सर्वथा तन्नः प्रसीदेति पुनः पुनः । ग्राम्यास्तमब्रुवन् रम्या स्यादर्धकथिता कथा ॥ २०६ ॥
अथाभाषिष्ट सिद्धार्थो नाख्यास्यामि तथाप्यहम् । कौतूहलं चेत्तद्भार्यां गत्वा पृच्छत तद्गृहे ॥ २०७ ॥
तद्वेश्मनि ययौ लोकः स्वभार्या तेन तद्दिने । कुट्टितामर्षवत्येवं सास्रदृक्[5] चिन्तयन्त्यभूत् ॥ २०८ ॥
सुष्ठु जातं यदेतस्य करांगुल्यो निकर्तिताः । न्यक्कृतश्चाखिलैर्लोकैर्लोकः संप्रत्युपैति चेत् ॥ २०९ ॥

---

१ निजगृहस्य । २ शिग्रुः भाषायां 'सरगवो' इति ख्यातः । ३ अजः । ४ अवकरः भाषायां 'उकरडो' इति ख्यातः । ५ अश्रुणा सहिता दृष्टिर्यस्याः सा । ६ तिरस्कृतः ।

अस्य दुश्चरितं सर्वं तदा प्रकटयाम्यहम् । यथैष लजते पापो मत्कुट्टनजवं फलम् ॥ २१० ॥
अथाययौ ग्रामजनोऽपृच्छत्तच्चेष्टितं च ताम् । सावोचत् कोऽस्य नामापि गृह्णीयात् पापकारिणः ॥२११॥
यदसावात्मनः स्वस्रा समं वैषयिकं सुखम् । भुंक्ते धिक्कर्मचाण्डालो न मामिच्छति जातुचित् ॥ २१२ ॥
एवं श्रुत्वा कलकलं कुर्वाणा ग्रामवासिनः । ययुर्निजनिजं गेहमछन्दकविगर्हिणः ॥ २१३ ॥
सर्वत्र पाप पापेति भर्त्स्यमानः स भिक्षुकः । भिक्षामप्याप न क्वापि धिक् प्रतिष्ठाच्युतं नरम् ॥ २१४ ॥
श्रीवीरं विजने गत्वा नत्वा दीनो जगाद सः । भगवन्नन्यतो याहि पूज्यः सर्वत्र पूज्यते ॥ २१५ ॥
अत्रैवाच्योऽस्मि नान्यत्र नामापि ज्ञायते मम । स्वदर्यामेव शौर्यं हि गोमायोर्न पुनर्बहिः ॥ २१६ ॥
अजानता दुर्विनयो यो मयाकारि नाथ ते । संप्राप्तं तत्फलं संप्रत्यनुकंपस्व मां ततः ॥ २१७ ॥
अप्रीतिमत्परीहाराभिग्रही भगवानथ । चचालोत्तरचावालं सन्निवेशं प्रति प्रभुः ॥ २१८ ॥
दक्षिणश्चोत्तरश्चेति चावालौ द्वौ तदन्तरे । सुवर्णवालुका रूप्यवालुका चेति निम्नगे ॥ २१९ ॥
दक्षिणादुत्तरे यातश्चावालेऽथालगत्प्रभोः । कंटके देवदूष्यार्धं सुवर्णवालुकातटे ॥ २२० ॥
किञ्चिद्गत्वा प्रभुर्मा भूद्भ्रष्टमस्थंडिले ह्यदः । इति तद्वीक्ष्य वस्त्रार्धं गन्तुं प्रववृते ततः ॥ २२१ ॥
पृष्ठलग्नस्त्रयोदशमास्यन्ते ब्राह्मणस्तु सः । तद्वस्त्रार्धमुपादाय वन्दित्वा च प्रभुं ययौ ॥ २२२ ॥ 
तुन्नवायस्य तस्यैव हृष्टो विप्रस्तदार्पयत् । सोऽपि ते देवदूष्यार्धे अयोजयदसंधिवत् ॥ २२३ ॥
दीनारलक्षं तन्मूल्यं बन्धू इव विभज्य तौ । अर्धमर्धं जगृहतुस्तुन्नवायो द्विजश्च सः ॥ २२४ ॥

१ शृगालस्य । २ नद्यौ ।

इतश्च भगवान् वीरः समीरण इवास्खलन् । श्वेतव्यभिमुखं गच्छन्नित्यूचे गोपदारकैः ॥ २२५ ॥
देवार्यायमृजुः पन्थाः श्वेतवीमुपतिष्ठते । किं त्वन्तरेऽस्य कनकखलाख्यतापसाश्रमः ॥ २२६ ॥
स हि दृग्विषसर्पेणाधिष्ठितो वर्ततेऽधुना । वायुमात्रैकसञ्चारोऽप्रचारः पक्षिणामपि ॥ २२७ ॥
विहाय तदमुं मार्गं वक्रेणाप्यमुना व्रज । सुवर्णेनापि किं तेन कर्णच्छेदो भवेद्यतः ॥ २२८ ॥
तं चाहिं प्रभुरज्ञासीद्यदसौ पूर्वजन्मनि । क्षपकः पारणकार्थं विहर्तुं वसतेरगात्[1] ॥ २२९ ॥
गच्छता तेन मंडूकी पादपाताद्विराधिता । आलोचनार्थमेतस्य दर्शिता क्षुल्लकेन सा ॥ २३० ॥
सोऽथ प्रत्युत मंडूकीर्दर्शयन् लोकमारिताः । ऊचे क्षुल्लं मया क्षुद्र किमेता अपि मारिताः ॥ २३१ ॥
तूष्णीकोऽभूत्ततः क्षुल्लोऽमंस्त चैवं विशुद्धधीः । महानुभावो यदसौ सायमालोचयिष्यति ॥ २३२ ॥
आवश्यकेऽप्यनालोच्य यावदेष निषेदिवान्[2] । क्षुल्लकोऽचिन्तयत्तावद्विस्मृतास्य विराधना ॥ २३३ ॥
अस्मारयच्च तां भेकीमालोचयसि किं न हि । क्षपकोऽपि क्रुधोत्थाय[3] क्षुल्लं हन्मीति धावितः ॥ २३४ ॥
कोपान्धश्च ततः स्तंभे प्रतिस्फल्य व्यपद्यत । विराधितश्रामण्योऽसौ ज्योतिष्केषूपपद्यत ॥ २३५ ॥
स च्युत्वा कनकखले सहस्रार्धतपस्विनाम् । पत्युः कुलपतेः पत्न्याः पुत्रोऽभूत् कौशिकाह्वयः ॥ २३६ ॥
तत्र कौशिकगोत्रत्वादासन्नन्येऽपि कौशिकाः । अत्यन्तकोपनत्वाच्च स ख्यातश्चंडकौशिकः ॥ २३७ ॥
श्राद्धदेवातिथित्वं[4] च तस्मिन् कुलपतौ गते । असौ कुलपतिस्तत्र तापसानामजायत ॥ २३८ ॥
मूर्छया[5] वनखंडस्य सोऽन्तर्भ्राम्यन्नहर्निशम् । अदात्कस्यापि नादातुं पुष्पं मूलं फलं दलम् ॥ २३९ ॥

---

१ उपाश्रयात् । २ निषसाद । ३ क्रोधेन । ४ श्राद्धदेवस्य यमस्यातिथित्वम् पंचत्वमिति यावत् । ५ मोहेन ।

विशीर्णमपि योऽगृह्णाद्वने तत्र फलादिकम्[1] । उत्पाट्य परशुं यष्टिं लोष्टुं वा तं जघान सः ॥ २४० ॥
फलाद्यलभमानास्तु सीदन्तस्ते तपस्विनः । पतिते लगुडे काका इव जग्मुर्दिशो दिशम् ॥ २४१ ॥
अन्येद्युर्वाटिकाहेतोः कौशिके बहिरीयुषि[2] । अज्ञांक्षुर्मङ्क्षु[3] राजन्याः[4] श्वेतव्या एत्य तद्वनम् ॥ २४२ ॥
अथ व्यावर्तमानस्य गोपास्तस्य न्यवीविदन् । पश्य पश्य वनं कैश्चिद्भज्यते भज्यते तव ॥ २४३ ॥
जाज्वल्यमानः क्रोधेन हविषेव[5] हुताशनः[6] । अकुंठधारमुद्यम्य कुठारं सोऽभ्यधावत ॥ २४४ ॥
राजपुत्रास्ततो नेशुः श्येनादिव शकुन्तयः[7] । स्खलित्वा च पपातायं यमवक्त्र इवावटे[8] ॥ २४५ ॥
पततः पतितस्तस्य संमुखः परशुः शितः[9] । शिरो द्विधा कृतं तेन ही विपाकः कुकर्मणाम् ॥ २४६ ॥
स विपद्य वनेऽत्रैव चण्डोऽहिर्दृग्विषोऽभवत् । क्रोधस्तीव्रानुबन्धो हि सह याति भवान्तरे ॥ २४७ ॥
अवश्यं चैष बोधार्ह इति बुद्ध्या जगद्गुरुः । आत्मपीडामगणयन्नृजुनैव पथा ययौ ॥ २४८ ॥
अभवत्पदसञ्चारसुसमीभूतवालुकम्[10] । उदपानावहत्कुल्यं[11] शुष्कजर्जरपादपम् ॥ २४९ ॥
जीर्णपर्णचयास्तीर्णं कीर्णं[12] वल्मीकपर्वतैः । स्थलीभूतोटजं जीर्णारण्यं न्यविशत प्रभुः ॥ २५० ॥
॥ युग्मम् ॥

तत्र चाथ जगन्नाथो यक्षमण्डपिकान्तरे । तस्थौ प्रतिमया नासाप्रान्तविश्रान्तलोचनः ॥ २५१ ॥

---

१ पतितम् । २ गते सति । ३ शीघ्रम् । ४ राजपुत्राः । ५ होमद्रव्येण । ६ अग्निः । ७ पक्षिविशेषाः । ८ गर्तायाम् ।९ तीक्ष्णः। १० न भवन् यः पदसचारस्तेन सुष्ठु समीभूता वालुका यस्मिंस्तत् । ११ उदकं पीयतेऽस्मिन्नुदपानं कूपपार्श्ववर्ती कुंडविशेषस्तस्मादावहन्ती कुल्या निर्झरिणी यस्मिंस्तत् । १२ व्याप्तम् ।

ततो दृष्टिविषः सर्पः सदर्पो भ्रमितुं बहिः । बिलान्निरसरज्जिह्वाकालरात्रिमुखादिव ॥ २५२ ॥
भ्रमन् सोऽनुवनं रेणुसंक्रामद्भोगलेखया । स्वाज्ञालेखामिव लिखन्नीक्षाञ्चक्रे जगद्गुरुम् ॥ २५३ ॥
अत्र मां कि[१]मविज्ञाय कि[२]मवज्ञाय कोऽप्यसौ । आः प्रविष्टो निराशंकं निष्कंपः शंकुवत्स्थितः ॥ २५४ ॥
तदेनं भस्मसादद्य करोमीति विचिन्तयन् । आध्मायमानः कोपेन फटाटोपं चकार सः ॥ २५५ ॥
ज्वालामालामुद्वमन्त्या निर्दहन्त्या लताद्रुमान् । भगवन्तं दृशाऽपश्यत् स्फारफूत्कारदारुणः ॥ २५६ ॥
दृष्टिज्वालास्ततस्तस्य ज्वलन्त्यो भगवत्तनौ । विनिपेतुर्दुरालोका उल्का इव दि[३]वो गिरौ ॥ २५७ ॥
प्रभोर्महाप्रभावस्य प्रभवन्ति स्म नैव ताः । महानपि मरुन्मेरुं किं कंपयितुमीश्वरः ॥ २५८ ॥
दा[४]रुदाहं न दग्धोऽसावद्यापीति क्रुधा ज्वलन् । दर्शं[५] दर्शं दिनेशं[६] हि दृग्ज्वालाः सोऽमुचत्पुनः ॥२५९॥
संपन्नासु प्रभौ वारिधाराप्रायासु तास्वपि । ददंश दन्दशूकः[७] स निः[८]शूकः पादपंकजे ॥ २६० ॥
दष्ट्वा दष्ट्वापचक्राम स्वविषोद्रेकदुर्मदः । यत्पतन्मद्विषाक्रान्तो मृद्नीयादेष मामपि ॥ २६१ ॥
दशतोऽप्यसकृत्तस्य न विषं प्राभवत्प्रभौ । गोक्षीरधाराधवलं केवलं रक्तमक्षरत् ॥ २६२ ॥
ततश्च पुरतः स्थित्वा किमेतदिति चिन्तयन् । वीक्षांचक्रे जगन्नाथं वीक्षापन्नः स पन्नगः ॥ २६३ ॥
ततो निरूप्य रूपं त[९]दसरूपं जगद्गुरोः । कान्तसौम्यतया मंक्षु विध्याते तद्विलोचने ॥ २६४ ॥
उ[१०]पसन्नं च तं ज्ञात्वा बभाषे भगवानिति । चंडकौशिक बुध्यस्व बुध्यस्व ननु मा मुह ॥ २६५ ॥
श्रुत्वा तद्भगवद्वाक्यमूहापोहं वितन्वतः । पन्नगस्य समुत्पेदे स्मरणं पूर्वजन्मनाम् ॥ २६६ ॥

---

१ अज्ञात्वा । २ तिरस्कृत्य । ३ आकाशात् । ४ दारुदग्ध्वा । ५ दृष्ट्वा दृष्ट्वा । ६ सूर्यम् । ७ सर्पः । ८ निर्दयः । ९ असमानम् । १० समीपस्थम् ।

ततः प्रदक्षिणीकृत्य स त्रिस्त्रिभुवनेश्वरम् । निष्कषायः स्वमनसानशनं प्रत्यपद्यत ॥ २६७ ॥
कृतानशनकर्माणं निष्कर्माणं महोरगम् । प्रशमापन्नमज्ञासीदन्वज्ञासीच्च तं प्रभुः ॥ २६८ ॥
कुत्राप्यन्यत्र मा यासीद्दृष्टिर्मे विषभीषणा । इति तुंडं[2] बिले क्षिप्त्वा पपौ स समतामृतम् ॥ २६९ ॥
तस्थौ तथैव तत्रैव स्वामी तदनुकंपया । परेषामुपकाराय महतां हि प्रवृत्तयः ॥ २७० ॥
भगवन्तं तथा दृष्ट्वा विस्मयस्मेरलोचनाः । गोपाला वत्सपालाश्च तत्रोपससृपु[3]र्द्रुतम् ॥ २७१ ॥
वृक्षान्तरे तिरोभूय यथेष्टं ग्रावलेष्टुभिः । प्रणिजघ्नुरनिर्भीकास्ते पन्नगस्य महात्मनः ॥ २७२ ॥
तथाप्यविचलं ते तं वीक्ष्य विश्रंभभाजिनः । यष्टिभिर्घट्टयामासुर्निकटीभूय तत्तनुम् ॥ २७३ ॥
आख्यज्जनानां तज्जोपास्ततस्तत्रागमज्जनाः । ववन्दिरे महावीरं[6]ममहंश्च महोरगम् ॥ २७४ ॥
घृतविक्रयकारिण्यो गच्छन्त्यस्तेन वर्त्मना । नागं हैयंगवीनेन[7]म्रक्षयन् पस्पृशुश्च तम् ॥ २७५ ॥
आगत्य घृतगन्धेन तीक्ष्णतुंडाः पिपीलिकाः । चक्रिरे तितउ[8]प्रायमहेस्तस्य कलेवरम् ॥ २७६ ॥
मत्कर्मणां कियदेतदित्यात्मानं निबोधयन् । वेदनामधिसेहे तां दुस्सहां सोऽहिपुंगवः ॥ २७७ ॥
वराक्यो[9] मा स्म पीड्यन्त स्वल्पसाराः पिपीलिकाः । इत्यचीचलदंगं न मनागपि महोरगः ॥ २७८ ॥
सिक्तः कृपासुधावृष्ट्या दृष्ट्या भगवतोरगः । पक्षान्ते[10] पंचतां प्राप्य सहस्रारदिवं ययौ ॥ २७९ ॥
एवं कौशिकनागायोपकृत्य निरगाद्वनात् । प्राप चोत्तरचावालसन्निवेशं जगद्गुरुः ॥ २८० ॥



---

१ समताप्राप्तम् । २ मुखम् । ३ उपाजग्मुः । ४ स्वतंत्राः सन्तः । ५ विश्वासभाजः । ६ अपूजयन् । ७ घृतेन । ८ तितउ भाषायां 'चालणी' तत्प्रायम् । ९ दीनाः । १० पंचदशदिनान्ते ।

पक्षान्ते पारणार्थं च भ्रमन् गोचरचर्यया । गृहिणो नागसेनस्य सदने प्रययौ प्रभुः ॥ २८१ ॥
तत्राहनि द्वादशाब्द्या गृहिणस्तस्य नन्दनः । अचिन्तितस्तदाभ्यागाद्धर्षदोऽनभ्रवृष्टिवत् ॥ २८२ ॥
उत्सवो नागसेनेन तेनाकारि स्ववेश्मनि । भोजितः स्वजनोऽशेषः स्वाम्यायातश्च वीक्षितः ॥ २८३ ॥
दूरात्स्वामिनमालोक्य प्रमोद[1]मधिकं वहन् । नागसेनोऽपि पयसा भक्तिमान् प्रत्यलाभयत् ॥ २८४ ॥
तत्रामरैरहोदानं सुदानमिति भाषिभिः । वसुधाराप्रभृतीनि पंच दिव्यानि चक्रिरे ॥ २८५ ॥
पारयित्वा प्रभुरपि श्वेतवीं नगरीं ययौ । प्रदेशिना नरेन्द्रेण जिनभक्तेन भूषिताम् ॥ २८६ ॥
पौरामात्यचमूपाद्यैः प्रदेशी परिवारितः । मघवेव[2]ापरोऽभ्येत्य जगन्नाथमवन्दत ॥ २८७ ॥
प्रदेशी स्वपुरेऽथागात् स्वामी च विहरन् क्रमात् । नगरं सुरभिपुरं तपःसुरभिरभ्यगात् ॥ २८८ ॥
मेदिन्या इव संव्यानं[3] प्रतिमानमिवांबुधेः । गंगां तरंगिणीं[4]मुच्चतरंगामासदत् प्रभुः ॥ २८९ ॥
तां तितीर्षुः[5] सिद्धदन्तनाविकप्रगुणीकृताम्[6] । आरोहद्भगवान्नावं पथिका अपरेऽपि हि ॥ २९० ॥
दंभाभ्यां चाल्यमानाभ्यां पक्षाभ्यामिव पक्षिणी । त्वरितं गन्तुमारेभे नौरभ्युद्यतनाविका[7] ॥ २९१ ॥
वाशितं[8] कौशिकेनो[9]च्चैस्तदानीं तटवर्तिना । क्षेमिलाख्यः शकुनज्ञोऽवोचत्क्षेमं न खल्विह ॥ २९२ ॥
प्राप्तव्यमचिरात् सर्वैर्व्यसनं[10] मरणान्तिकम् । महर्षेरस्य महिम्ना तस्मान्मोक्ष्यामहे परम् ॥ २९३ ॥
ब्रुवाण एव तत्रैवं[11] नौरगाधं जलं ययौ । सुदाढो नागकुमारस्तत्रस्थं चैक्षत प्रभुम् ॥ २९४ ॥

---

१ हर्षम् । २ इन्द्र इव । ३ उत्तरीयम् । ४ नदीम् । ५ तरितुमिच्छुः । ६ सिद्धदन्तनाम्ना नाविकेन सज्जीकृताम् । ७ अभ्युद्यता उद्यमवन्तो नाविका यस्या सा । ८ शब्दितम् । ९ घूकेन । १० व्यसनात् । ११ तस्मिन्क्षेमिले ।

स्मृत्वा प्राग्जन्मवैरं स क्रुध्यन्नेवमचिन्तयत् । सोऽयं येन त्रिपृष्ठत्वे सिंहोऽहं निहतस्तदा ॥ २९५ ॥
एतद्देशातिदूरस्थे गिरौ निवसता मया । नापराद्धं तदा किंचित्त्रिपृष्ठस्य सतोऽस्य हि ॥ २९६ ॥
निजदोर्वीर्यदर्पेण कुतूहलचिकीर्षया । गुहामध्ये निलीनोऽहं तदानीं निहतोऽमुना ॥ २९७ ॥
दिष्ट्यैष गोचरो दृष्ट्याः स्वं वैरं साधयाम्यहम् । वैरं हि ऋणवत्पुंसां जन्मान्तरशतानुगम् ॥ २९८ ॥
आसन्नमप्यवसानं मम खेदाय नाधुना । प्राग्वैरसाधनादद्य कृतार्थीकृतजन्मनः ॥ २९९ ॥
एवं विचिन्त्य सामर्षः सुदाढो विकटेक्षणः[2] । एत्योपवीरं व्योमस्थश्चक्रे किलकिलारवम् ॥ ३०० ॥
अरे रे कुत्र यासीति विब्रुवन् विचकार सः । संवर्तकमहावातं संवर्तानिलभीषणम् ॥ ३०१ ॥
निपेतुस्तरवस्तेन पर्वताश्च चकम्पिरे । गांगमुच्छलति स्मोच्चैर्जलमभ्रंलिहोर्मिकम् ॥ ३०२ ॥
सा च गांगैस्तरंगैर्नौः समुत्पातिनिपातिभिः[3] । उदच्यते[4] न्यच्यते[5] स्म द्विरदोपात्तरूपवत् ॥ ३०३ ॥
निर्भग्नः कूपकस्तंभः शीर्णः सितपटोऽपि च । आत्मेव नावो मूढोऽभूत् कर्णधारो भयातुरः ॥ ३०४ ॥
आरेभे देवताः स्मर्तुं मर्तुकामः समाकुलः । यमजिह्वाग्रवर्तीव नौवर्ती सकलो जनः ॥ ३०५ ॥
इतश्च मथुरापुर्यां जिनदासो वणिक् पुरा । श्रावकोऽभूत्तस्य भार्या साधुदासीति विश्रुता ॥ ३०६ ॥
प्रत्याख्यातां धार्मिकौ तौ चतुःपदपरिग्रहम् । दध्यादिकं चिक्रियतुश्चाभीरीपार्श्वतोऽन्वहम् ॥ ३०७ ॥
आभीरी काचिदन्येद्युरानिन्ये प्रवरं दधि । क्रीत्वा च साधुदासीति तामुवाच प्रसन्नवाक् ॥ ३०८ ॥
त्वया नान्यत्र नेतव्यं दुग्धदध्यादिकं निजम् । अहमेव ग्रहीष्यामि मूल्यं दास्ये तवेप्सितम् ॥ ३०९ ॥

१ मरणम् । २ भयंकरनेत्रः । ३ उद्गच्छन्निपतद्भिः । ४ उद्गच्छति । ५ अधः पतति ।

तथैव प्रत्यहं चक्रे साभीरी प्रीतमानसा । तां वेषवारदानेन सच्चक्रे साधुदास्यपि ॥ ३१० ॥
द्वयोः प्रववृते स्नेहः स्वस्रोरिव तयोर्महान् । आभीर्याः सदने तस्या विवाहोऽभवदन्यदा ॥ ३११ ॥
निमंत्रितौ तयोद्वाहे श्रेष्ठिनावेवमूचतुः । आवामक्षणिकौ भद्रे नागन्तुं तत्र शक्नुवः ॥ ३१२ ॥
यत्तु वस्तु विवाहार्हं तद्गृहाणास्मदालयात् । इत्युक्त्वा ददतुर्वस्त्रधान्यालंकरणादिकम् ॥ ३१३ ॥
तद्दत्तैर्वस्तुभिस्तस्या विवाहः शोभनोऽभवत् । सर्वस्वजनगोपानामेकशृंगारकारणम् ॥ ३१४ ॥
गोपाः प्रीता रूपवन्तौ द्वावुक्षाणौ त्रिहायनौ । नाम्ना कंबलशवलौ श्रेष्ठ्यर्थमुपनिन्यिरे ॥ ३१५ ॥
श्रेष्ठिनोऽनाददानस्याप्युक्षाणौ ते बलादपि । द्वारे बद्ध्वा ययुर्गोपा गोपानां स्नेह ईदृशः ॥ ३१६ ॥
अथ दध्यौ जिनदासो मुच्येते यद्यमू वृषौ । हलादौ योजयिष्येते तदा हि प्राकृतैर्नरैः ॥ ३१७ ॥
इह चानुपकारित्वाद्दुष्पालौ किं करोमि हा । कीदृशे पातितोऽस्म्येष मूर्खस्नेहेन संकटे ॥ ३१८ ॥
इति ध्यात्वा कृपापूर्णः श्रेष्ठी तावपुषद्वृषौ । तृणादिना प्रासुकेन पयसा गलितेन च ॥ ३१९ ॥
श्रेष्ठ्यष्टम्यां चतुर्दश्यामुपवास्यात्तपौषधः । अवाचयद्धर्मशास्त्रपुस्तकं शृण्वतोस्तयोः ॥ ३२० ॥
जज्ञाते भद्रकौ तौ च धर्माकर्णनतोऽन्वहम् । श्रेष्ठी यत्राह्नि नाभुंक्त नाभुञ्जातां च तत्र तौ ॥ ३२१ ॥
तृणादिकं दीयमानमपि तत्र दिने यदा । न वृषौ बुभुजाते तौ तदा श्रेष्ठीत्यचिन्तयत् ॥ ३२२ ॥
मयानुकंपया पुष्टावियत्कालं वृषाविमौ । अतः परं पोषणीयौ बन्धू साधर्मिकाविति ॥ ३२३ ॥

---

१ वस्त्रसमूहदानेन । २ श्रेष्ठी च श्रेष्ठिनी चेत्येकशेषः । ३ अप्राप्तसमयौ । ४ त्रिवर्षौ । ५ अगृह्णतः । ६ अपुष्यत् । ७ गृहीतपौषधव्रतः ।

तयोर्वृषभयोरेवं बहुमानं विशेषतः। चक्रे दिने दिने श्रेष्ठी न हि तौ [1]तद्धिया पशू ॥ ३२४ ॥
भंडीरवणयक्षस्य जज्ञे यात्रोत्सवोऽन्यदा। वाहनानां वाहकेली चारेभे ग्रामदारकैः ॥ ३२५ ॥
वयस्यो जिनदासस्य कौतुकी तौ वृषावुभौ। अनापृच्छ्य गृहीत्वागात् स्नेहे ह्यैतमानिता ॥ ३२६ ॥
कुर्कुटांडाविव श्वेतौ [2]सदृक्षौ युग्मजाविव। कन्दुकाविव वृत्तांगौ [3]चामरोपमवालधी ॥ ३२७ ॥
उत्पतिष्णू इवो[4]द्धुर्यौ वेगाद्वायोरिवात्मजौ। शकट्यां योजयामास तौ वृषौ श्रेष्ठिनः सुहृत् ॥ ३२८ ॥
[5]तत्सौकुमार्यमविदन् [6]प्राजनाराभिरीरयन्। चित्रीयमाणो लोकानां सोऽकूपस्ताववाहयत् ॥ ३२९ ॥
वाहकेलीकृतपणान् पौरान् सर्वाञ्जिगाय सः। ताभ्याम[7]द्वैतरंहोभ्यां वृषभाभ्यां क्षणादपि ॥ ३३० ॥
आराभिश्छोच्छलद्रक्तप्लावितांगौ च तौ वृषौ। जातत्रोटौ श्रेष्ठिगृहे भूयो बद्ध्वा जगाम सः ॥ ३३१ ॥
भोजनावसरे श्रेष्ठी स्वयं यवसपूलभृत्। तयोर्वृषभयोः पार्श्वे ययौ तनययोरिव ॥ ३३२ ॥
[8]व्यात्तास्यौ निःसहौ साम्रौ बहुश्वासौ [9]सवेपथू। [10]आरक्षतक्षरद्रक्तौ प्रेक्ष्य तावित्युवाच सः ॥ ३३३ ॥
एतौ पापात्मनोक्षाणौ प्राणेभ्योऽपि प्रियौ मम। ममानापृच्छ्य नयता नीतौ केनेदृशीं दशाम् ॥ ३३४ ॥
श्रेष्ठिनो मित्रवृत्तान्तमाख्यत् परिजनोऽखिलम्। खेदं श्रेष्ठ्यपि सो[11]दर्यविपदी[12]वासदद्भृशम् ॥ ३३५ ॥
तौ वृषावप्यनशनं कर्तुकामौ विवेकिनौ। न मनाग्जग्रतुरपि श्रेष्ठिदत्ते तृणांभसी ॥ ३३६ ॥

---

१ तस्य श्रेष्ठिनो बुद्ध्या। २ समानौ। ३ चामरसदृशपुच्छौ। ४ उदूर्ध्वं धूर्ययोस्तौ उद्धुरौ तयोर्भावस्तस्मात्। ५ तयोः सुकुमारत्वम्। ६ प्राजनं भाषायां 'परोणी' तस्याराभिः। ७ अद्वैतवेगाभ्याम्। ८ विवृतमुखौ। ९ कंपसहितौ। १० आरेण क्षतावत एव क्षरद्रुधिरौ। ११ बन्धुविपत्तौ। १२ प्रापत्।

ततश्चाढौकयच्छ्रेष्ठी स्थालमाढ्यान्नपूरितम् । संभावयामासतुस्तद्दृशापि हि न तौ वृषौ ॥ ३३७ ॥
भावं ज्ञात्वा तयोर्भक्तप्रत्याख्यानमदत्त सः । तावपि प्रतिपेदाते साभिलाषौ समाहितौ ॥ ३३८ ॥
तयोश्च कृपया श्रेष्ठी स्वयं त्यक्तान्यकर्मकः । नमस्कारान् ददत्तस्थौ बोधयंश्च भवस्थितिम् ॥ ३३९ ॥
शृण्वन्तौ तौ नमस्कारान् भावयन्तौ भवस्थितिम् । समाधिना मृतौ नागकुमारेषु बभूवतुः ॥ ३४० ॥
अथ कंबलशंबलाववधेस्तावपश्यताम् । क्रियमाणं सुदाढेन स्वामिनस्तमुपद्रवम् ॥ ३४१ ॥
कृतमन्येन कृत्येन कृत्यमेतद्यदर्हतः । उपसर्गं निषेधावो ध्यात्वैवं तावुपेयतुः ॥ ३४२ ॥
एकः प्रववृते योद्धुं सुदाढेनाहिना सह । द्वितीयः पाणिनोत्पाट्य निन्ये नावं नदीतटे ॥ ३४३ ॥
महर्द्धिकोऽपि सुदाढ आयुःप्रान्ते गलद्बलः । ताभ्यां नूतनदेवत्ववैभवाभ्यामजीयत ॥ ३४४ ॥
नंष्ट्वा सुदंष्ट्रः प्रययौ तौ च नागकुमारकौ । नत्वा प्रभौ ववृषतुः पुष्पगन्धोदके मुदा ॥ ३४५ ॥
नद्या इवापदोऽमुष्या उत्तीर्णास्त्वत्प्रभावतः । इति ब्रुवाणा नौलोका भक्त्या वीरं ववन्दिरे ॥ ३४६ ॥
प्रभुं नत्वेयतुर्नागौ तैर्या[2] उत्तीर्य च प्रभुः । यथावदैर्यापथिकीं प्रतिक्रम्यान्यतोऽचलत् ॥ ३४७ ॥
सूक्ष्मार्द्रमृत्तिके गंगासैकते पदपद्धतिः । चक्रादिलाञ्छिता भर्तुरभूद्भूषणं स्फुटा ॥ ३४८ ॥
सामुद्रलक्षणाभिज्ञः पुष्पो नाम ददर्श ताम् । एवं च दध्यौ कोऽप्येष एकाकी चक्रवर्त्यगात् ॥ ३४९ ॥
अद्याप्यप्राप्तराज्यो वा हृतो वा केनचिच्छलात् । मन्ये संप्रत्यसौ याति तं सेवे सेवकैषिणम्[3] ॥ ३५० ॥
असावस्यामवस्थायां सेवितः फलदः खलु । सेव्यस्य सेवावसरः पुण्येनैव हि लभ्यते ॥ ३५१ ॥

१ जग्मतुः । २ नावः । ३ सेवकमिच्छतीति तथा तम् ।

ध्यात्वेत्यनुपदं सोऽगात् स्थूणाके सन्निवेशने । अधोऽशोकस्य चापश्यत्प्रभुं प्रतिमया स्थितम् ॥ ३५२ ॥
श्रीवत्सलाञ्छितं वक्षः शिरोऽप्युष्णीषलांछितम् । चक्रादिलाञ्छितौ पाणी भुजौ भुजगराण्निभौ॥३५३॥
दक्षिणावर्तगम्भीरशुषिरं नाभिमंडलम् । लोकोत्तराणि लक्ष्माणि प्रभोरेवं ददर्श सः ॥ ३५४ ॥
एवं चाचिन्तयत् पुष्पो यथार्थं पादलक्षणैः । लोकोत्तरस्तथान्यैरप्यसौ चक्रीति सूच्यते ॥ ३५५ ॥
अप्येभिर्लक्षणैरेष भिक्षुरित्यस्मि विस्मितः । धिङ्मे शास्त्रश्रमं धिङ्मामस्मिन्नाशाविधायिनम् ॥ ३५६ ॥
प्रतारणाय विश्वस्य स्वस्य कौतूहलाय वा । अनाप्तैरेव शास्त्राणि विहितानीति मन्यते ॥ ३५७ ॥
तेषां वाचा निबद्धाशो धावितोऽस्मि मुधैव हि । मृगतृष्णाजलायेव हरिणो मरुमंडले ॥ ३५८ ॥
एवं विमृश्य पुष्पोऽधाद्विषादमधिकं हृदि । तदा चाचिन्तयच्छक्रः कथं विहरति प्रभुः ॥ ३५९ ॥
अपश्यच्चावधिदृशा स्थूणाके स्वामिनं स्थितम् । तं च नैमित्तिकं पुष्पं विषादाच्छास्त्रदूषकम् ॥ ३६० ॥
अथ द्रुतमुपैत्येन्द्रो जिनेन्द्रं प्रतिमास्थितम् । अवन्दत महाऋद्ध्या तस्य पुष्पस्य पश्यतः ॥ ३६१ ॥
शक्रः पुष्पं बभाषे च किं नु शास्त्राणि निन्दसि । तत्कारकांश्च किं तर्हि न मृषा भाषितं किल ॥३६२॥
बाह्यान्येव हि जानासि लक्षणान्यान्तराणि तु । स्वामिनः क्षीरधवले अविस्रे मांसशोणिते ॥ ३६३ ॥
मुखपंकजनिःश्वासः पंकजामोदसोदरः । निरामयं मलस्वेदवर्जितं च प्रभोर्वपुः ॥ ३६४ ॥
अयं हि त्रिजगन्नाथो धर्मचक्री जगद्धितः । विश्वाभयप्रदः स्वामी वीरः सिद्धार्थनन्दनः ॥ ३६५ ॥
इन्द्राश्चतुःषष्टिरपि स्वामिनोऽस्य पदातयः । कियन्मात्रं चक्रिणस्ते येभ्यः फलमभीप्ससि ॥ ३६६ ॥

१ उष्णीषं शिरोवेष्टनम् । २ दक्षिणावर्तशंखवद्गंभीरं शुषिरं छिद्रं यस्य तत् । ३ दुर्गन्धरहिते ।

दत्वासौ वार्षिकं दानं तितीर्षुर्भवसागरम् । त्यक्तराज्यः परिव्रज्य विहरत्येवमश्रमः ॥ ३६७ ॥
शास्त्राणि संवदन्त्येव मा विषीद मनागपि । ददाम्यभीप्सितं ते च न मुधा स्वामिदर्शनम् ॥ ३६८ ॥
इत्युक्त्वाभीप्सितं तस्मै दत्वा च त्रिदशेश्वरः । नमस्कृत्य जगन्नाथं यथास्थानं पुनर्ययौ ॥ ३६९ ॥
कायोत्सर्गं पारयित्वा विहरन् भगवानपि । पादन्यासैः पुनानः क्ष्मां प्राप राजगृहं पुरम् ॥ ३७० ॥
पुरस्यादूरतस्तस्य नालंदाया बहिर्भुवि । विशालां स्वाम्यगाच्छालां तन्तुवायस्य कस्यचित् ॥ ३७१ ॥
तन्तुवायमनुज्ञाप्य वर्षा वस्तुं जगद्गुरुः । शालाया एकदेशेऽस्थान्मासक्षपणमाश्रितः ॥ ३७२ ॥
इतोऽभून्मंखलिर्मंखो भद्रा तस्य च गेहिनी । उभौ विजह्रतुः पृथ्वीं दधानौ चित्रपट्टिकाम् ॥ ३७३ ॥
प्राप्ते शरवणग्रामे सुभद्रासूत चान्यदा । द्विजातेर्गोबहुलस्य गोशालायां तनूरुहम् ॥ ३७४ ॥
स गोशालाप्रसूतत्वाद्गोशाल इति संज्ञितः । क्रमाद्युवा मंखशिल्पमभ्यस्तवान्निजम् ॥ ३७५ ॥
निसर्गतः कलिकरः पित्रोरप्यवशंवदः । निर्लक्षणो जन्मतोऽपि सोऽभूत्कूटविचक्षणः ॥ ३७६ ॥
पितृभ्यां कलहं कृत्वा गृहीत्वा चित्रपट्टिकाम् । भ्राम्यन् भिक्षां स एकाकी ययौ राजगृहेऽन्यदा॥३७७॥
स्वामिनालंकृते शालाकोणे तत्रानुमान्य तम् । गोशालोऽप्यवसत्सिंहसन्निधाविव जंबुकः ॥ ३७८ ॥
नाथोऽपि मासक्षपणपारणस्य विधित्सया । विजयश्रेष्ठिनो वेश्म प्राविशत्पाणिभाजनः ॥ ३७९ ॥
भक्त्या महत्या विजयश्रेष्ठी श्रेष्ठमतिः स्वयम् । सम्यग्भोजनविधिना स्वामिनं प्रत्यलाभयत् ॥ ३८० ॥

---

१ पवित्रा कुर्वाणः । २ चित्रशिल्पजीवी भिक्षुकविशेषः । ३ पुत्रम् । ४ स्वभावात् । ५ विधातुमिच्छया । ६ हस्तावेव भाजनं पात्रं यस्य सः ।

अहो दानं सुदानं चेत्युच्चैराघोषिणोऽमराः । रत्नवृष्ट्यादिदिव्यानि तद्गृहे पञ्च चक्रिरे ॥ २८१ ॥
आकर्ण्य तत्तु गोशालोऽचिन्तयद्यदयं मुनिः । न सामान्योऽस्यान्नदातुर्गृहे श्रीर्यदजृदियम् ॥ २८२ ॥
विहाय चित्रफलकपाखंडं तदमुं निजम् । अस्य शिष्यीभवाम्यद्य निःफलो नेदृशो गुरुः ॥ २८३ ॥
तत्रैवं चिन्तयत्येव पारयित्वा जगद्गुरुः । एत्य तत्रैव शालायामस्थात्प्रतिमया प्रभुः ॥ २८४ ॥
गोशालः स्वामिनं नत्वोवाच वाचंयमस्य ते । मया प्रभावो नाज्ञायि विज्ञेनापि प्रमादतः ॥ २८५ ॥
शिष्यस्तेऽहं भविष्यामि त्वमेकः शरणं मम । इत्युक्त्वा स तथा चक्रे तूष्णीकोऽस्थात्प्रभुः पुनः॥२८६॥
गोशालो भिक्षया प्राणवृत्तिं कुर्वन् दिवानिशम् । नामुञ्चत् स्वामिनः पार्श्वे स्वबुद्ध्या शिष्यतां गतः ॥२८७
द्वितीयमासक्षपणे स्वामी वेश्मन्युपागतः । आनन्देन गृहस्थेन खाद्यकैः प्रत्यलाभ्यत ॥ २८८ ॥
तृतीयमासक्षपणे सुनन्दगृहिणा प्रभुः । सर्वकामगुणाख्येनाहारेण प्रत्यलाभ्यत ॥ २८९ ॥
गोशालकोऽपि भैक्षेण कुक्षिपूरणतत्परः । भगवन्तं महावीरमसेवत दिवानिशम् ॥ २९० ॥
प्राप्तायामूर्जराकायां गोशालो हृद्यचिन्तयत् । ज्ञान्येष श्रूयत इति परीक्षे ज्ञानमस्य हि ॥ २९१ ॥
जायमाने प्रतिगृहं वार्षिकेऽस्मिन् महोत्सवे । भिक्षायां किमहं लप्स्ये स्वामिन्नाख्याहि मेऽधुना ॥२९२॥
सिद्धार्थः स्वामिसंक्रान्तो बभाषे भद्र लप्स्यसे । धान्याम्लं कोद्रवकूरमेकं कूटं च रूपकम् ॥ २९३ ॥
तदाकर्ण्य च गोशालो दिनारंभात्प्रभृत्यपि । विशिष्टभोजनाभ्यर्थी श्ववाभ्राम्यद्गृहे गृहे ॥ २९४ ॥
तथापि कुत्रचित् किंचिन्न कथंचिदवाप सः । श्रान्तोऽपराह्णे केनापि निन्ये कर्मकृता गृहे ॥ २९५ ॥

---

१ मुनेः । २ दक्षेणापि । ३ आनन्दनाम्ना । ४ कार्तिकपूर्णिमायाम् ।

धान्याम्लकोद्रवकूरे दत्ते तेनापि सोऽपि ते[1] । बुभुजेऽति[2]क्षुधा लेभे दक्षिणायां च रूपकम् ॥ ३९६ ॥
परीक्षिते रूपकेऽपि कूटे सति स लज्जितः । यद्भावि तद्भवतीति नियतिवादमग्रहीत् ॥ ३९७ ॥
दीक्षातः प्रावृषं स्वामी द्वितीयाम[3]तिगम्य ताम् । नालन्दाया निरी[4]यागात् कोल्लाके सन्निवेशने ॥ ३९८ ॥
तदा च बहुलो नाम विप्रो विप्रानभोजयत् । महादरेण स्वगृहे भिक्षार्थी चाययौ प्रभुः ॥ ३९९ ॥
सशर्कराज्यक्षैरेय्या स प्रभुं प्रत्यलाभयत् । चक्रुश्च पञ्च दिव्यानि तदौकसि दिवौकसः ॥ ४०० ॥
चतुर्थमासक्षपणपारणं व्यधित प्रभुः । संसारतारणं दातुः श्र[5]द्धातुरपि जन्मिनः ॥ ४०१ ॥
इतश्च सायं गोशालः शालां ह्री[6]णोऽविशच्छनैः । अपश्यन् स्वामिनं लोकान् क्व स्वामीत्यन्वयुंक्त सः॥४०२
स्वाम्युदन्तं न कोऽप्याख्यत् सोऽन्वेष्टुं स्वामिनं ततः । पर्यटत्[7] सुचिरं दीनो नालन्दासन्निवेशने॥४०३॥
भूयो वराक एकाकी जातोऽस्मीति विचिन्त्य सः । मुंडयित्वा शिरस्त्यक्तवस्त्रो निरगमत्ततः ॥ ४०४ ॥
गतश्च कोल्लाकेऽश्रौषीद्धन्योऽयं बहुलो द्विजः । मुनौ दानाद्यस्य गृहे रत्नवृष्टिः सुरैः कृता ॥ ४०५ ॥
तच्छ्रुत्वा चिन्तयत् सोऽपि प्रभावस्तस्य हीदृशः । मद्गुरोरेव नान्यस्य नूनमत्र स तिष्ठति ॥ ४०६ ॥
एवं विमृश्य सोऽन्वेष्टुं भ्राम्यन्निपुणया दृशा । ऐक्षिष्ट स्थितमेकत्र कायोत्सर्गधरं प्रभुम् ॥ ४०७ ॥
स प्रणम्य प्रभुं स्माह नाहं दीक्षोचितः पुरा । वस्त्रादिसंगादभवं त्यक्तसंगोऽस्मि संप्रति ॥ ४०८ ॥
प्रतिपद्यस्व मां शिष्यं यावज्जीवं गुरुर्भव । त्वां विनैषदपि स्थातुं न क्षमः परमेश्वर ॥ ४०९ ॥
नीरागे त्वयि कः स्नेहो नैकहस्ता हि तालिका । स्वामिन्मन्मनः किं तु बलात्त्वामनुधावति ॥ ४१० ॥

---

१ ते धान्याम्लं कोद्रवकूरं च । २ अतिक्षुधया । ३ अतिक्रम्य । ४ निर्गत्य । ५ श्रद्धावतः । ६ लज्जितः । ७ दीनः ।

त्वयाऽभ्युपगतं स्वं तु जानाम्येष तथापि हि । स्मेरारविन्दसध्रीच्या दृशा मां यन्निरीक्षसे ॥ ४११ ॥
नीरागोऽपि ऋव्यतार्थं तद्भावं च विदन्नपि । तद्वचः पत्यपादीशो महान्तः क्व न वत्सलाः ॥ ४१२ ॥
गोशालेन समं स्वर्णखलाख्यं सन्निवेशनम् । प्रत्यचालीत्प्रभुर्मार्गे युगमात्रप्रदत्तदृक् ॥ ४१३ ॥
मार्गे गोपै रोध्यमानं पायसं प्रेक्ष्य मंखसूः । ऊचेति क्षुधितोऽस्म्येहि कुर्वः पायसभोजनम् ॥ ४१४ ॥
सिद्धार्थः स्माह निष्पत्तिं नेदं यास्यति पायसम् । गोशालोऽप्येत्य गोपालान् दुष्टधीरित्यभाषत॥४१५॥
देवार्योऽयं त्रिकालज्ञ आख्याति यदसावुषा । स्फुटिष्यत्यर्धनिष्पन्नपायसैवाममांडवत् ॥ ४१६ ॥
भीता वंशदलैः स्थालीं बबन्धुस्तां च गोपकाः । भूयिष्ठैस्तंदुलैः क्षिप्तैर्विकसन्निश्च सास्फुटत् ॥ ४१७ ॥
आदाय कर्पराण्याशु गोपास्तदपि पायसम् । तदलाभे च गोशालोऽत्यन्तं नियतिमग्रहीत् ॥ ४१८ ॥
स्वाम्यगाद्ब्राह्मणग्रामे द्वौ स्तस्तत्र च पाटकौ । तयोर्नन्दोपनन्दाख्यौ स्वामिनौ भ्रातरावुभौ ॥ ४१९ ॥
षष्ठपारणके स्वामी प्राविशन्नन्दपाटके । स दध्युषितकूरेण नन्देन प्रत्यलाभि च ॥ ४२० ॥
गोशालः पाटकेऽन्यस्मिन् प्रविष्टः प्रेक्ष्य वेश्म च । उत्तुंगमुपनन्दस्य ययौ भिक्षार्थमादृतः ॥ ४२१ ॥
उपनन्दाज्ञया दासी कूरं तस्योषितं ददौ । तच्चानिच्छन्नुपनन्दमाचुक्रोश स दुष्टधीः ॥ ४२२ ॥
उपनन्दोऽवदन्नक्तं नैष गृह्णाति चेत्तदा । अस्य मूर्ध्नि क्षिप क्षिप्रं सापि चक्रे तथैव हि ॥ ४२३ ॥
गोशालः कुपितोऽवोचन्मद्गुरोरस्ति चेत्तपः । तेजो वा तर्हि सद्योऽपि दह्यतामस्य मन्दिरम् ॥ ४२४ ॥

१ विकचितकमलसमानया । २ पच्यमानम् । ३ गोशालः । ४ मृत्स्थाली । ५ अपक्वमृत्पात्रवत् । ६ स्थालीशकलानि । ७ नियतिवादम् । ८ रथ्ये ।

मा स्वामिनामग्रहणाद्वन्ध्यः[1] शापोऽपि भूदिति । तत्रस्थव्यन्तराः सद्याधाक्षुस्तत्तृणपूलवत्[2] ॥ ४२५ ॥
स्वामी च प्रययौ चंपां वर्षारात्रं तृतीयकम् । तत्र चास्थात् प्रतिज्ञातद्विमासक्षपणद्वयः ॥ ४२६ ॥
कायोत्सर्गेणोत्कटिकादिभिस्तैस्तैरथासनैः । तस्थौ मुक्त इवेहापि स्वामी सम्यक्समाधिभृत् ॥ ४२७ ॥
बहिः पुर्या द्वितीयं द्विमासक्षपणपारणम् । कृत्वा स्वामी सगोशालः कोल्लाकेऽगात्सन्निवेशने ॥ ४२८ ॥
नक्तं तत्र गृहे शून्ये तस्थौ प्रतिमया प्रभुः । तद्द्वारेऽस्थात्तु गोशालो लीत्वा कपिरिवास्थिरः ॥ ४२९ ॥
तदा ग्रामेशतनयः सिंहोऽभिनवयौवनः । विद्युन्मत्या समं दास्या रिरंसुस्तत्र[3] चाविशत् ॥ ४३० ॥
सोऽवोचदुच्चकैरेवं योऽत्रास्ति श्रमणो द्विजः । पान्थो वापि स आख्यातु यामो येनान्यतो वयम् ॥४३१॥
कायोत्सर्गप्रपन्नत्वात्तूष्णीकः स्वाम्यभूत्तदा । तत्तु श्रुत्वापि गोशालः कपटान्नोत्तरं ददौ ॥ ४३२ ॥
अलब्धप्रतिवाक् सिंहश्चिरं रेमे तया सह । क्षणं स्थित्वा च निर्गन्तुं प्रावर्तत ततो गृहात् ॥ ४३३ ॥
गोशालो द्वारदेशस्थः प्रकृत्या दुर्मतिश्चलः । विद्युन्मतीं विनिर्यान्तीं दासीं पस्पर्श पाणिना ॥ ४३४ ॥
स्वामिन् स्पृष्टास्मि केनापीत्युच्चकैर्व्याजहार सा । वलित्वा कुपितः सिंहो भूत्वा गोशालमब्रवीत् ॥४३५॥
अरे रे बध्नना बद्धः स्थित्वानाचारमावयोः । पश्यन्नस्था भाषितोऽपि तदा नादास्त्वमुत्तरम् ॥ ४३६ ॥
इत्युक्त्वा कुट्टयित्वा तं सिंहः स्वस्थानमभ्यगात् । गोशालः स्वामिनं स्माह पश्यतां वो हतोऽस्म्यहम् ४३७
सिद्धार्थोऽथावदत्त्वीदमस्मद्वत्किं न रक्षसि । आचरंश्चापलं चैवं द्वारस्थः किं न कुट्यसे ॥ ४३८ ॥
निष्क्रम्य स्वाम्यगाद्ग्रामे पत्रकालेऽभिधानतः । प्राग्वच्चास्थाच्छून्यगृहे निशायां प्रतिमाधरः ॥ ४३९ ॥

१ निष्फलः । २ अदहन् । ३ रन्तुमिच्छुः ।

भयान्निलीय गोशालः कोणेऽस्थात्तत्र वेश्मनि । रन्तुं दन्तिलया दास्यागात् स्कन्दो ग्रामणीसुतः ॥४४०॥
सिंहवद्व्याहरत् सोऽपि न च कोऽप्युत्तरं ददौ । क्रीडित्वा निर्ययौ स्कन्दो गोशालोऽहसदुच्चकैः ॥४४१॥
नग्नः पिशाचवत्स्थित्वा हसत्युच्चैस्तु को न्विति । जल्पंस्तं कुट्टयामास स्कन्दोऽगादथ वेश्मनि ॥ ४४२॥
गोशालोऽप्यब्रवीन्नाथं स्वामिधर्मः किमेष ते । निर्दोषं हन्यमानस्य त्राणं मे कुरुषे न यत् ॥ ४४३ ॥
सिद्धार्थः पुनरूचे तं त्वो मूर्खैवमनेकशः । अनर्थं मुखदोषेण त्वं तित्तिरिरिवाश्नुषे ॥ ४४४ ॥
कुमारसन्निवेशेऽगाद्भगवानथ तत्र च । चंपकरमणीयाख्योद्यानेऽभूत् प्रतिमाधरः ॥ ४४५ ॥
तत्र चासीद्धनधान्यऋद्धः कूपनयाह्वयः । कुलालः प्रियमदिरो मदिराकीटवत्सदा ॥ ४४६ ॥
तच्छालायां पार्श्वनाथशिष्यः शिष्यगणावृतः[१] । बहुश्रुतो मुनिचन्द्राचार्य आसीत्तदा स्थितः ॥ ४४७ ॥
शिष्यं गच्छे स्थापयित्वा स सूरिर्वर्धनाभिधम् । जिनकल्पप्रतिकर्म विदधेऽत्यन्तदुष्करम् ॥ ४४८ ॥
तपःसत्त्वसूत्रैकत्वबलानां तुलनाभिदाम्[२] । भावयन् स्वं द्वितीयया सोऽन्यदास्थात्समाहितः ॥ ४४९ ॥
इतश्चोवाच गोशालो नाथं मध्यन्दिनक्षणे । समयो वर्तते यामो भिक्षायै ग्राममध्यतः ॥ ४५० ॥
सिद्धार्थोऽथाब्रवीदद्य वर्तामह उपोषिताः । गोशालस्त्वविशद्ग्रामे भिक्षाहेतोर्बुभुक्षितः ॥ ४५१ ॥
सोऽपश्यत्पार्श्वशिष्यांस्तान् विचित्रवसनावृतान् । पात्रादिधारिणः के नु यूयमित्यन्वयुंक्त च ॥ ४५२ ॥
निर्ग्रन्थाः पार्श्वशिष्याः स्मो वयमित्यूचिरेऽथ ते । गोशालोऽपि हसन्नूचे धिग्वो मिथ्याभिभाषिणः ॥४५३॥
कथं नु यूयं निर्ग्रन्था वस्त्रादिग्रन्थधारिणः । केवलं जीविकाहेतोरियं पाखंडकल्पना ॥ ४५४ ॥

१ शिष्यसमूहेनावृतः । २ तुलनाभेदाना मध्ये द्वितीयया सत्त्वभिदात्मानं भावयन्नस्थादित्यन्वयः ।

वस्त्रादिसंगरहितो निरपेक्षो वपुष्यपि । धर्माचार्यो हि यादृक्षे निर्ग्रन्थास्तादृशाः खलु ॥ ४५५ ॥
ते जिनेन्द्रमजानन्तः प्रत्यूचुर्यादृशो भवान् । धर्माचार्योऽपि ते तादृगात्तलिंगः स्वयं किमु ॥ ४५६ ॥
क्रुधा चुक्रोश गोशालो मम धर्मगुरोर्यदि । तपस्तेजोऽस्ति तदयं दह्यतां व उपाश्रयः ॥ ४५७ ॥
तेऽप्यब्रुवंस्त्वद्वचनान्न हि दह्यामहे वयम् । गोशालोऽपि विलक्षः सन् गत्वा स्वामिनमभ्यधात् ॥४५८॥
दृष्टा मयाद्य सग्रन्था निन्दन्तो वस्तपस्विनः । दह्यतामाश्रमोऽसावित्याक्रुष्टं च रुषा मया ॥ ४५९ ॥
तथापि नाश्रयस्तेषामदह्यत मनागपि । तत्र किं कारणं स्वामिन्नाख्याहि परमार्थतः ॥ ४६० ॥
सिद्धार्थोऽप्यवदच्छिष्याः श्रीपार्श्वस्वामिनो हि ते । तेषामुपाश्रयो हन्त त्वद्गिरा दह्यते कथम् ॥ ४६१ ॥
अत्रान्तरे निशा जज्ञे मुनिचन्द्राख्यसूरयः । उपाश्रयाद्बहिर्भूत्वा तस्थुः प्रतिमया तदा ॥ ४६२ ॥
स च कूपनयः श्रेणिं[1]भक्ते पीतसुरो[2] बहिः । मत्तो घूर्णन् समागच्छन्नाचार्यांस्तानुदैक्षत ॥ ४६३ ॥
आचार्यांश्चौरबुद्ध्या तान् गृहीत्वा निर्दयं गले । निरुच्छ्वासीचकाराशु कुंभकारो दुराशयः ॥ ४६४ ॥
शुक्लध्यानादचलिता वेदनां तां सहिष्णवः । सद्यो जातावधिज्ञाना मृत्वाचार्या दिवं ययुः ॥ ४६५ ॥
तेषामुपरि पुष्पाणि प्रत्यूष[3]पवना इव । प्रवर्षन्तो महिमानमासन्नव्यन्तरा व्यधुः ॥ ४६६ ॥
इतोऽपि च स गोशालो विद्युन्मालामिवांबरे । तेजोरूपां देवपंक्तिं दृष्ट्वाचख्या इति प्रभोः ॥ ४६७ ॥
स्वामिंस्त्वत्[4]प्रत्यनीकानां दह्यते किं प्रतिश्रयः । व्योम्ना ज्वालाकुलेनानुमीयतेऽदः प्रदीपनम् ॥ ४६८ ॥
सिद्धार्थोऽप्यभ्यधान्नैवमन्निधास्ते हि सूरयः । दिवं गताः शुक्लध्यानाच्छुक्लध्यानं हि कामधुक् ॥ ४६९॥

---

१ पानगोष्ठयाम् । २ पीता सुरा येन सः । ३ प्रातः कालस्य वायवः । ४ तव शत्रूणाम् ।

तेषां कर्तुं महिमानमेते तेजोमयाः सुराः । यैस्ते प्रदीपनभ्रान्तिरुत्पन्ना स्वल्पमेधसः ॥ ४७० ॥
तद्द्रष्टुं कौतुकात्तत्र गोशालः प्रययौ द्रुतम् । स्वस्थानं च ययुर्देवाः क्केदृशां देवदर्शनम् ॥ ४७१ ॥
पुष्पगन्धाम्बुवृष्टिं स तत्र दृष्ट्वा प्रमोदभाक् । गत्वा प्रतिश्रये सुप्तांस्तच्छिष्यानभ्यधादिति ॥ ४७२ ॥
किं भवन्तो दुष्टशिष्या मुंडा भिक्षां यदृच्छया । भुक्त्वा दिने निशां सर्वां शेरतेऽजगरा इव ॥ ४७३ ॥
न हीदमपि जानीथ यत्सूरिः प्राप पञ्चताम् । गुरुषु प्रतिबन्धोऽयमहो वः कुलजन्मनाम् ॥ ४७४ ॥
उत्तस्थुस्तेऽपि तच्छब्दात् पिशाच इव को न्वसौ । एवं शब्दायत इति चिन्तयन्तो महर्षयः ॥ ४७५ ॥
तेऽथ जग्मुरुपाचार्यमाचार्यं प्रेक्ष्य तं तथा । चिरं निनिन्दुरात्मानं कुलीना इव नन्दनाः[2] ॥ ४७६ ॥
तान् गोशालोऽपि निर्भर्त्स्य स्वेच्छालापविदूषकः[3] । इयाय नाथं नाथोऽपि चोराकेऽगात्सन्निवेशने ॥ ४७७ ॥
प्रतिचक्रभयात्[4]तत्रारक्षैश्चोरगवेषिभिः । कायोत्सर्गस्थितः स्वामी सगोशालोऽप्यदृश्यत ॥ ४७८ ॥
ब्रूहि कोऽसीति तैः पृष्टः स मौनाभिग्रहः प्रभुः । न किञ्चिदभ्यधाद्वाचंयमा हि बधिरा इव ॥ ४७९ ॥
कश्चापि हेरिको ह्येष नूनं यन्मौनभागसौ । स्वामिनं ते सगोशालं जगृहुः क्रूरबुद्धयः ॥ ४८० ॥
गोशालं शाकिनीवत्ते बद्ध्वा कूपे निचिक्षिपुः । मुहुर्घटीवद्दिधुर्न्यंचनोदंचनानि च ॥ ४८१ ॥
पार्श्वशिष्ये उत्पलस्य जामी[6] सोमाजयन्तिके । साधुवर्यौ परिव्राजौ चोराकेऽवसतां तदा ॥ ४८२ ॥
ईदृग्रूपौ नरौ कौचित् क्षेपणोत्क्षेपणैर्जले । आरक्षैः पीड्यमानौ स्तस्ते इत्यश्रृणुतां जनात् ॥ ४८३ ॥
छद्मस्थश्चरमतीर्थकरोऽसौ नु भवेदिति । उपेत्य ते क्षणान्नाथं तथावस्थमपश्यताम् ॥ ४८४ ॥

१ आचार्यसमीपम् । २ पुत्राः । ३ स्वेच्छालापेन विदूषकः । ४ शत्रुभयात् । ५ गूढचरः । ६ भगिन्यौ ।

आरक्षानूचतुश्चैवं किं रे मूर्खा मुमूर्षवः[1] । न जानीथ प्रभुममुं सिद्धार्थनृपनन्दनम् ॥ ४८५ ॥
ते भीताः स्वामिनं मुक्त्वा नत्वा चाक्षमयन्मुहुः । महान्तो हि न कुप्यन्ति क्षम्यन्ते त्वात्मशंकितैः ४८६
दिनानि कतिचित्तत्रातिवाह्य परमेश्वरः । तुर्यां प्रावृषमत्येतुं पृष्ठचंपां पुरीं ययौ ॥ ४८७ ॥
चतुर्मासक्षपणकृद्विविधप्रतिमाधरः । चतुर्मासीं जगन्नाथस्तत्र तस्थाववस्थितः ॥ ४८८ ॥
चतुर्मास्यन्तदिवसे पारयित्वा बहिः क्वचित् । जगाम त्रिजगन्नाथो नगरं कृतमंगलम् ॥ ४८९ ॥
दरिद्रस्थविराभिख्याः सारंभाः सपरिग्रहाः । सकलत्राः ससन्तानास्[2]तत्र पाखंडिनोऽवसन् ॥ ४९० ॥
मध्ये तत्पाटकस्यासीदेकं देवकुलं महत् । तेषां कुलक्रमायातदेवताप्रतिमांकितम् ॥ ४९१ ॥
तस्य देवकुलस्यैककोणे तस्थौ समाहितः । तत्स्तंभ इव निष्कंपः कायोत्सर्गधरः प्रभुः ॥ ४९२ ॥
माघमासे तदा रात्रौ शीतमासीत् सुदुस्सहम् । तेषां पाखंडिनां देवकुले चाभून्महोत्सवः ॥ ४९३ ॥
ते पुत्रादिपरीवारास्तस्मिन्नायतने मुदा । तदा संभूय ननृतुर्जगुः[3] परिजजागरुः ॥ ४९४ ॥
हसन्नूचेऽथ गोशालः पाखंडाः केऽप्यमी बत । येषां पत्न्यो मद्यपानं गीतनृत्तादि चोच्चकैः ॥ ४९५ ॥
तच्छ्रुत्वा कुपितास्तेऽपि सारमेय[4]मिवालयात् । कंठे गृहीत्वा गोशालं तत्कालं निरसारयन् ॥ ४९६ ॥
शीतसंकुचितांगोऽस्थाद्गोशालोऽथ हकारवत्[5] । वादयन्दन्तपंक्तिं च वैणिको वल्लकीमिव[6] ॥ ४९७ ॥
गोशालं सानुकंपास्ते तत्र प्रावेशयन् पुनः । सोऽपशीतो[7] मुहूर्तेन तथैव पुनरभ्यधात् ॥ ४९८ ॥
स तैर्निःसारितो भूयो भूयश्चापि प्रवेशितः । एवं कोपकृपाभ्यां ते तस्य त्रिरिति चक्रिरे ॥ ४९९ ॥

१ मर्तुमिच्छवः २ सपुत्राः । ३ कुर्वन्तीत्यध्याहारः । ४ श्वानम् । ५ हकाराक्षरवत् । ६ वीणाम् । ७ अपगतं शीतं यस्मात्सः ।

तुर्यवारेऽथ गोशालः प्रविष्टोऽप्यब्रवीदिति । सद्भूतार्थाभिधानेऽपि को वः कोपोऽल्पमेधसाम् ॥ ५०० ॥
निजाय दुश्चरित्राय पाखंडाः किं न कुप्यथ । स्फुटार्थवादिनेऽमुष्मै मह्यं द्रुह्यथ किं मुहुः ॥ ५०१ ॥
उत्तिष्ठतोऽथ पाखंडयूनस्तत्कुट्टनेच्छया । निवारयन्तस्तद्वृद्धा एवमभ्यधुरुच्चकैः ॥ ५०२ ॥
देवार्यस्य तपोराशेः कोऽप्यमुष्य महात्मनः । पीठधारश्छत्रधारोऽपरो वा स्यादुपासकः ॥ ५०३ ॥
अनेन भाषितेनालं भाषतां स्वेच्छयाप्यसौ । श्रोतुं चेन्न क्षमास्तद्भोः कुरुध्वं वाद्यवादनम् ॥ ५०४ ॥
तथैव चक्रिरे तेऽपि जातेऽथ तपनोदये । श्रावस्तीं स्वाम्यगात्तस्थौ बहिश्च प्रतिमाधरः ॥ ५०५ ॥
भोजनावसरे प्राप्ते गोशालः प्रभुमभ्यधात् । भिक्षार्थं भगवन्नेहि जन्मसारं हि भोजनम् ॥ ५०६ ॥
सिद्धार्थः प्राग्वदित्यूचे हंहो वयमुपोषिताः । गोशालोऽपृच्छदथ स्यान्ममाहारोऽद्य कीदृशः ॥ ५०७ ॥
सिद्धार्थोऽप्याख्यदधुना नृमांसं भक्षयिष्यसि । गोशाल ऊचे तद्भोक्ष्ये मांसगन्धोऽपि यत्र न ॥ ५०८ ॥
एवं निश्चित्य भिक्षायै श्रावस्तीं सोऽविशत्पुरीम् । इतश्च तस्यां नगर्यां पितृदत्तोऽवसद्गृही ॥ ५०९ ॥
श्रीभद्रा तत्प्रिया निंदुर्[3]नैमित्तं शिवदत्तकम् । अपत्यं मे कथं जीवेदित्यपृच्छत् कृतादरा ॥ ५१० ॥
सोऽप्याचख्यौ जातमृतं पिष्ट्वा सासृक्पलं[4] शिशुम् । क्षीरेण पायसीकृत्य सर्पिर्मधुसमन्वितम् ॥ ५११ ॥
यद्युच्छूलितपादाय भोक्तुं दत्से सुभिक्षवे । तज्जीविष्यन्त्यपत्यानि नूनं नश्यत्प्रसूतिके[5] ॥ ५१२ ॥
॥ युग्मम् ॥

१ चतुर्थवारे । २ सेवकः । ३ जातान्येव यस्या अपत्यानि म्रियन्ते सा निन्दुः । ४ शोणितमांससहितम् । ५ नश्यन्ती प्रसूतिः प्रसवो यस्यास्तत्संबुद्धौ ।

भुक्त्वा तत्र गते गेहद्वारं कार्यं त्वयान्यथा । ज्ञात्वा तद्भोजनं क्रुद्धो मा धाक्षीत्स गृहं तव ॥ ५१३ ॥
मृतार्भे पायसीचक्रे स्वं तथैव सुतार्थिनी । गोशालायागतायादात्तदानीं भक्तितश्च सा ॥ ५१४ ॥
भुक्त्वा च गत्वा स्वाम्यग्रेऽवोचद्भ्रान्तश्चिरादसि । सिद्धार्थोऽप्याख्यदेतस्मै पायसं तत्तथा कृतम् ॥५१५॥
ववाम तत्तु गोशालो मुखे क्षिप्त्वा निजांगुलीम् । नखाद्यवयवांस्तत्र ददर्श च चुकोप च ॥ ५१६ ॥
ययौ तद्वेश्म चान्वेष्टुं तद्द्वारे चान्यथा कृते । नाज्ञासीत्तत्तु गोशालो गोपाल इव लक्षणम् ॥ ५१७ ॥
ततोऽभ्युवाच गोशालस्तपस्तेजश्च मद्गुरोः । यदि तद्दह्यतामेष प्रदेशः सकलोऽपि हि ॥ ५१८ ॥
मान्यथा जिनमाहात्म्यं भूदिति व्यन्तरामराः । तत्र सन्निहिताः सर्वं प्रदेशमदहंस्[1]तकम् ॥ ५१९ ॥
किंचित् स्थित्वा प्रभुरगाद्ग्रामं नाम्ना हरिद्रुकम् । बहिर्हरिद्रुवृक्षस्य तलेऽस्थात् प्रतिमाधरः ॥ ५२० ॥
पत्र[2]च्छायातपत्रस्य तले तस्यैव शाखिनः । तदावात्सीन्महासार्थः श्रावस्तीं नगरीं गमी ॥ ५२१ ॥
स तु सार्थः शीतभीतो व्याघ्रभीत इवान[3]लम् । नक्तमज्वालयत्प्रातरुत्थाय च ययौ पुरः ॥ ५२२ ॥
स प्रमादादशान्तोऽग्निर्व्याधिवत्प्रसरन् क्रमात् । आगात्प्रभुमहावीरं मध्यांभोधीव [4]वाडवः ॥ ५२३ ॥
एत्येष वह्निर्भगवन्नश्येत्यथ ब्रुवन् । काकनाशं प्रणश्यागाद्गोशालः शीघ्रमन्यतः ॥ ५२४ ॥
श्रुत्वापि तद्वचः स्वामी ध्यानानलमिवानलम् । तं कर्मेन्धनदाहाय मन्वा[5]नोऽस्थादतिस्थिरः ॥ ५२५ ॥
चरणौ स्वामिनस्तेन वह्निना श्याम[6]लीकृतौ । हैमनेन तुषारेण पद्मकोशाविवाधिकम् ॥ ५२६ ॥
शान्ते वह्नौ सगोशालो ग्रामेऽगाल्लांगलाभिधे । स्वाम्यस्थाच्च प्रतिमया वासुदेवनिकेतने ॥ ५२७ ॥

१ तम् । २ पत्राणां छाया पत्रच्छायं तदेवातपत्रंछत्रं तस्य । ३ अग्निम् । ४ वडवानलः । ५ मन्यमानः । ६ श्यामीकृतौ ।

क्रीडायातान् ग्रामडिम्भान् गोशालस्तत्र कौतुकी । प्रेतवद्विकृतं रूपं कृत्वाभीषयताभितः ॥ ५२८ ॥
भयात् कोऽपि पतद्वस्त्रः स्फुटन्नासाश्च केचन । प्रस्खलद्गतयो नेशुर्ग्रामाभिमुखमर्भकाः ॥ ५२९ ॥
अभ्येत्य पितरस्तेषां गोशालं प्रेक्ष्य तादृशम् । अर्भान् किं त्रासयसीति जल्पन्तोऽकुट्टयन् भृशम् ५३०
तद्वृद्धाः स्वामिनं प्रेक्ष्य स्वानूचुर्मुच्यतामयम् । देवार्यस्यास्य संभाव्य एष शुश्रूषकः खलु ॥ ५३१ ॥
तन्मुक्त ऊचे गोशालः स्वामिन्नद्यापि किं नु माम् । उपेक्षसे हन्यमानं वज्रवन्निष्ठुरोऽसि हा ॥ ५३२ ॥
सिद्धार्थस्तमभाषिष्ट सुष्ठ्वद्यापि निहन्यसे । व्याधिनेवांगोत्थितेन स्वभावेनामुनैव हि ॥ ५३३ ॥
कायोत्सर्गं पारयित्वा ग्राम आवर्तनामनि । गत्वा स्वामी बलदेवौकस्यस्थात् प्रतिमाधरः ॥ ५३४ ॥
डिम्भांस्तत्रापि गोशालो भीषयामास पूर्ववत् । तत्पितृभिः कुट्यते स्म चक्री[1]वानिव दुर्मदः ॥ ५३५ ॥
गतेषु तत्पितृष्वर्भान् पुनर्भीषयते स्म सः । प्राणात्ययेऽपि जन्तूनां प्रकृतिः खलु दुस्त्यजा ॥ ५३६ ॥
क्रुद्धास्तत्पितरोऽभ्येत्य परस्परमदोऽवदन् । वराकं बाल[2]कुट्टाकं कुट्टयित्वालमेतकम् ॥ ५३७ ॥
स्वाम्यस्य कुट्यतामेष य एनं न निषेधति । भृत्यानामपराधे हि भर्तुर्दण्ड इति स्थितिः ॥ ५३८ ॥
हि[3]त्वागस्यपि गोशालं शालावृकमिवाथ ते । उदस्तदंडाः श्रीवीरमभ्यढौकन्त दुर्धियः ॥ ५३९ ॥
तत्रस्थव्यन्तरेणार्हद्भक्तेनाधिष्ठिता रुषा । साक्षात्सीरीव सीर्य[6]र्चोत्सीरो[7]दस्थाच्च तद्गृहे ॥ ५४० ॥
आशंकाविस्मयाकीर्णाः पतित्वा पादपद्मयोः । स्वामिनं क्षमयामासुस्ते ग्रामीणाः स्वनिन्दिनः[8] ॥ ५४१ ॥

१ गर्दभः । २ बालश्चासौ कुट्टाको हन्ता च तम् । ३ अपराधे । ४ श्वानम् । ५ क्रोधेन । ६ सीरिणो बलदेवस्यार्चा प्रतिमा।
७ उदूर्ध्वं सीरं हलं यस्याः सा । ८ आत्मनिंदाकारिणः ।

ततश्च प्रययौ स्वामी चोराके सन्निवेशने । तत्रैकत्र रहःस्थाने तस्थौ च प्रतिमाधरः ॥ ५४२ ॥
गोशालो नाथमित्यूचे गन्तव्यं चर्यया न वा । सिद्धार्थोऽभिदधेऽस्माकमुपवासोऽद्य वर्तते ॥ ५४३ ॥
गोशालः क्षुधितोऽविशद्ग्रामे भिक्षार्थमुत्सुकः । गोष्ठीभक्तं तदा तत्र राध्यमानं ददर्श च ॥ ५४४ ॥
भिक्षाक्षणोऽभून्नवेति लीनो[1] गोशाल ऐक्षत । तत्र ग्रामे तदानीं चाभवच्चोरभयं महत् ॥ ५४५ ॥
चौरोऽयं चौरचारो[2] वा निलीनो यदुदीक्षते । एवं वितर्क्य ते ग्राम्या गोशालकमकुट्टयन् ॥ ५४६ ॥
मम धर्मगुरोस्तेजस्तपो वा यदि तद्द्रुतम् । दह्यतां मंडपोऽमीषामिति गोशालकोऽशपत् ॥ ५४७ ॥
व्यन्तरैर्भगवद्भक्तैरदह्यत स मंडपः । जगाम च जगन्नाथः सन्निवेशं कलंबुकम् ॥ ५४८ ॥
तत्रोभौ भ्रातरौ मेघः कालहस्ती च शैलपौ[3] । कालहस्ती तदा सैन्यैरधावच्चौरपृष्ठतः ॥ ५४९ ॥
गोशालसहितं नाथमागच्छन्तं ददर्श सः । चौरावित्याशशंके च तादृशामीदृशी हि धीः ॥ ५५० ॥
कौ युवामिति सोऽपृच्छत् स्वामी मौनीत्युवाच न । केलिप्रियत्वाद्गोशालोऽप्यस्थान्मौनी प्लवंगवत्[4] ॥ ५५१
गोशालं स्वामिनमपि स बद्ध्वा भ्रातुरार्पयत् । स्वामिनं दृष्टपूर्वी च मेघः सिद्धार्थसेवकः ॥ ५५२ ॥
क्षमयित्वामुचन्मेघो नाथं नाथोऽपि चावधेः । ज्ञात्वाचिन्तयदद्यापि निर्जयं बहु कर्म मे ॥ ५५३ ॥
कर्मासहायैस्तन्मन्ये न हि क्षेप्यं[5] झगित्यपि । जय्यं महद्द्विषच्चक्रं विना न खलु सैनिकैः ॥ ५५४ ॥
आर्यदेशे विहरता सहाया[6] दुर्लभा मया । तस्मादनार्यदेशेषु विहरिष्यामि संप्रति ॥ ५५५ ॥

---

१ गुप्तः । २ चोरस्य चारो दूत इति यावत् । ३ पर्वतस्वामिनौ । ४ वानरवत् । ५ क्षेप्तुं शक्यम् । ६ उपसर्गकारिण एवात्र सहाया इष्टाः ।

एवं विमृश्य भगवान्निसर्गक्रूरपूरुषम् । विवेश लाटविषयं यादोघोरमिवार्णवम् ॥ ५५६ ॥
मुंरू इत्यहनन् केऽपि स्पश इत्यपरेऽधरन् । ववन्धुर्दस्युरित्येके श्रीवीरं तत्र पूरुषाः ॥ ५५७ ॥
भषणान्मुमुचुः केऽपि प्रतिस्वामि कुतूहलात् । चक्रुः स्वरुच्या निःशंकमन्येऽन्याश्च विडंबनाः ॥५५८॥
अमोदतोपसर्गैस्तैः कर्मणां क्षपणात्प्रभुः । अत्युग्रैर्भेषजै रोगी रोगनिग्रहणादिव ॥ ५५९ ॥
गोशालोऽप्यनुलग्नः सन् सेहे विविधवेदनाः । वन्धनताडनाद्युत्था वनानीत इव द्विपः ॥ ५६० ॥
तत्रैवं भूरिशः कृत्वा कर्मनिर्जरणं प्रभुः । कृतकृत्य इवाचालीदार्यदेशस्य संमुखम् ॥ ५६१ ॥
यान्तं च स्वामिनं पूर्णकलशग्रामसन्निधौ । प्रवेष्टुकामौ लाटोर्व्यां तस्करौ द्वावपश्यताम् ॥ ५६२ ॥
तावसौ दुःशकुनमित्युद्यतासी जिघांसया । प्रति प्रभुं दधावाते प्रेतावुत्कार्त्तिकाविव ॥ ५६३ ॥
वर्ततेऽद्य कथं स्वामीत्युच्चिन्तो वज्रभृत्तदा । ददर्शावधिना नाथं जिघांसू तौ च तस्करौ ॥ ५६४ ॥
तौ वज्रेणावधीद्वज्री वज्रशैलक्रमौजसा । दन्तिक्षोदक्षमेणेव पाणिना हरिणौ हरिः ॥ ५६५ ॥
क्रमेण भद्दिलपुरे स्वाम्यगात्तत्र पंचमीम् । निन्ये वर्षाचतुर्मासीं चतुर्मासीमुपोषितः ॥ ५६६ ॥
पारयित्वा वहिः क्वापि विहरंश्च प्रभुः क्रमात् । ग्रामे जगाम कदलीसमागम इतीरिते ॥ ५६७ ॥
तत्राथार्त्तारिकाभक्तं दीयमानं तदार्थिनाम् । विलोक्योवाच गोशालो स्वामिन्नेह्यत्र भुज्यताम् ॥५६८॥
सिद्धार्थोऽभिदधेऽस्माकमुपवासोऽद्य वर्तते । भोक्ष्येऽहमेकोऽपीत्युक्त्वा तत्र गोशालको ययौ ॥ ५६९ ॥

१ यादोभिर्जलजन्तुभिर्घोरम् । २ गूढचरः । ३ शुनः । ४ हन्तुमिच्छया । ५ गजचूर्णीकरणे समर्थेन । ६ सिंहः । ७ ख्याते । ८ सदाव्रतभोजनम् ।

भुञ्जानस्तत्र गोशालः पिशाच इव नातृपत् । ग्राम्याः स्थालं महत् सर्वान्नपूर्णं तस्य चार्पयन् ॥ ५७० ॥
तद्भक्तमखिलं भोक्तुं गोशालो न ह्यभूत्क्षमः । आकंठमानाहारो[1] यदाचामेऽप्यलसायते[2] ॥ ५७१ ॥
स्वाहारशक्तेरप्यज्ञः किं दुष्कालोऽसि मूर्तिमान् । इत्युक्त्वा चिक्षिपुर्भक्तस्थालं तन्मूर्ध्नि तज्जनाः ॥५७२॥
तुन्दं[3] परामृशंस्तृप्त्या गोशालोऽगाद्यथागतम् । जंबूखंडाभिधं ग्रामं जगाम भगवानपि ॥ ५७३ ॥
प्रतिमास्थे प्रभौ तत्रास्तारिकाभक्तलिप्सया । गतो गोशालकः प्राग्वत्प्राप भोजनधर्षणे ॥ ५७४ ॥
क्रमेण प्रययौ स्वामी तुंबाके सन्निवेशने । वहिश्चास्थात्प्रतिमया गोशालो ग्राममभ्यगात् ॥ ५७५ ॥
तत्र पार्श्वशिष्यान्नन्दिषेणान् वृद्धान् बहुश्रुतान् । परिवारभृतो मुक्त्वा गच्छचिन्तामशेषतः ॥ ५७६ ॥
जिनकल्पप्रतिकर्म प्रपन्नान्मुनिचन्द्रवत् । दृष्ट्वा जहास गोशालः स्वाम्यभ्यर्णमगात्पुनः ॥५७७॥ युग्मम् ॥
नक्तं चतुष्के ते तस्थुर्नन्दिषेणमहर्षयः । कायोत्सर्गभृतो धर्मध्यानस्थाः स्थाणुवत्स्थिराः ॥ ५७८ ॥
आरक्षेण च दृष्टास्ते चौरभ्रान्त्या च जघ्निरे । सद्यो जातावधिज्ञाना मृत्वा दिवमुपासदन् ॥ ५७९ ॥
प्रेक्ष्य गोशालकस्तेषां महिमानं कृतं सुरैः । तच्छिष्याणामुपेत्याख्यदुच्चैर्भर्त्सनपूर्वकम् ॥ ५८० ॥
अथागाद्विहरन् वीरः कूपिकां सन्निवेशनम् । तत्रारक्षैः सगोशालः स्पशभ्रान्त्या[4] कदर्थितः ॥ ५८१ ॥
देवार्यो रूपवान् शान्तो युवारक्षैः स्पशभ्रमात् । निरागास्ताड्यमानोऽस्तीत्युल्लापोऽभूज्जनेऽखिले ॥५८२॥
पार्श्वशिष्ये च प्रगल्भाविजये प्रोज्झितव्रते[5] । निर्वाहाय परिव्राट्त्वं प्रपन्ने तत्र तिष्ठतः ॥ ५८३ ॥
वार्तामाकर्ण्य तां मा भूद्वीरोऽर्हन्निति शंकया । तत्रेयतुस्तथास्थं च भगवन्तमपश्यताम् ॥५८४॥ युग्मम्

---

१ कंठप्रमाणाहारवान् । २ जलपानेऽपि । ३ उदरम् । ४ स्पशो गूढचरः । ५ प्रोज्झितं त्यक्तं व्रतं चारित्रं याभ्यां ते ।

ते स्वामिनं ववन्दाते आरक्षांश्चैवमूचतुः । रे मूर्खा किं न जानीथ वीरं सिद्धार्थनन्दनम् ॥ ५८५ ॥
शीघ्रं मुञ्चत चेज्ज्ञाता शक्रो व्यतिकरं ह्यमुम् । पातयिष्यति वो मूर्ध्नि वज्रं प्राणहरं तदा ॥ ५८६ ॥
अथ तैश्चकितैर्मुक्तः क्षमितश्च प्रभुः पुरीम् । विशालीं प्रतिचचाल द्वौ मार्गौ स्तस्तदन्तरे ॥ ५८७ ॥
तत्रावोचत गोशालो नायास्यामि त्वया समम् । मां हन्यमानमपि यत्त्वं तटस्थ इवेक्षसे ॥ ५८८ ॥
अन्यत्तवोपसर्गैः स्युरुपसर्गा ममापि हि । यदग्निः शुष्कसंपर्कादहत्यार्द्रमपि क्षणात् ॥ ५८९ ॥
अन्यच्च लोको मामादौ निहन्ति त्वां ततः खलु । क्लेशाद्भोजनवृत्तिश्च जायते वा न वा मम ॥ ५९० ॥
ग्रावखंडे च रत्ने चारण्ये च नगरेऽपि च । आतपे मंडपे चापि वह्नौ च सलिलेऽपि च ॥ ५९१ ॥
जिघांसौ सेवके चापि निर्विशेषस्य ते ननु । सेवां को नाम कुर्वीत तनयोऽहमिव मूढधीः ॥५९२॥युग्मम्
त्वत्सेवा तालसेवेव मया भ्रान्तेन या कृता । सा स्मर्तव्यातः परं तां करिष्यामि न खल्वहम् ॥ ५९३ ॥
सिद्धार्थोऽथावदत्तुभ्यं रोचते यत्कुरुष्व तत् । इयमेव हि नः शैली सा भवेज्जातु नान्यथा ॥ ५९४ ॥
ततो जगाम भगवान् विशालीगामिनाध्वना । प्रचचाल च गोशाल एको राजगृहाध्वना ॥ ५९५ ॥
गोशालोऽयान्महारण्यं चौरपंचशतान्वितम् । विवेश मूषक इव सर्पाकीर्णं महाबिलम् ॥ ५९६ ॥
वृक्षारूढश्चौरपुमान् गृध्रवद्दूरतोऽपि तम् । ददर्शाख्यच्च चौराणां नग्नः कोऽप्यैत्यकिंचनः[1] ॥ ५९७ ॥
तेऽप्यूचिरे तथाप्येष न मोच्यः स्याच्चरोऽप्ययम् । किं चैष नः पराभूय यातीदमपि नोचितम् ॥५९८॥
एवं चान्यर्णमायातं गोशालं मातुलो हि भोः । वदन्तः पृथगिति तेऽध्यारुह्य तमवाहयन् ॥ ५९९ ॥
पृथक् पृथग्वाहनया तेषां गोशालकोऽभवत् । श्वासशेषवपुस्ते च चौराः प्रययुरन्यतः ॥ ६०० ॥

---

१ ऐति आगच्छति ।

शुनेव स्वामिहीनेन मया लब्धाद्य दुःसहा ॥ ६०१ ॥
अचिन्तयच्च गोशालो विपत्प्रथमतोऽप्यसौ । शुनेव स्वामिहीनेन मया लब्धाद्य दुःसहा ॥ ६०१ ॥
भर्तुश्च विपदं घ्नन्ति देवाः शक्रादयोऽपि हि । तत्पादशरणस्थस्य ममापि विपदोत्यगुः ॥ ६०२ ॥
क्षमं स्वयमपि त्रातुमुदासीनं तु कारणात् । मन्दभाग्यो निधिमिव तं प्राप्स्यामि कथं पुनः ॥ ६०३ ॥
अन्वेष्यामि तमेवेति निश्चित्यातीत्य तद्वनम् । गोशालोऽश्रान्तमभ्राम्यत् प्रभुपाददिदृक्षया ॥ ६०४ ॥
स्वामी जगाम विशाल्यां शालां कर्मारसंश्रिताम्[2] । अनुज्ञाप्य जनांस्तत्स्थांस्तस्थौ च प्रतिमाधरः ॥६०५॥
कर्मारो रोगितश्चैष षण्मास्या कल्यतां[3] गतः । शुभेऽहनि स्वजनेन वृतः शालामियाय ताम् ॥ ६०६ ॥
तत्राग्रे स्वामिनं दृष्ट्वा सोऽचिन्तयदहो इदम् । प्रथमेऽप्यह्नि पाखण्डिदर्शनाशकुनं मम ॥ ६०७ ॥
इहैवामंगलमिदं पातयामीत्ययोघनम्[4] । उत्पाट्य स्वामिनं हन्तुं सोऽधावत दुराशयः ॥ ६०८ ॥
क्व स्वामीति तदा ज्ञातुं प्रायुंक्त मघवावधि । जिघांसुं तं च कर्मारमपश्यच्चाजगाम च ॥ ६०९ ॥
तस्यैव तं घनं मूर्ध्नि स्वशक्त्यापातयद्धरिः । कथंचिद्रोगमुक्तोऽपि जगाम स यमालयम् ॥ ६१० ॥
प्रणम्य स्वामिनं शक्रः कल्पं सौधर्ममन्वगात् । स्वामी च विहरन् प्राप ग्रामाकं सन्निवेशनम् ॥ ६११ ॥
बिभेलिकाभिधानस्य तत्र यक्षस्य सद्मनि । बिभेलकोद्यानस्थेऽस्थात् कायोत्सर्गधरः प्रभुः ॥ ६१२ ॥
स यक्षः प्राग्भवस्पृष्टसम्यक्त्वोऽपूजयत्प्रभुम् । दिव्यैः पुष्पांगरागाद्यैरनुरागाधिवासितः ॥ ६१३ ॥
ग्रामेऽथ शालिशीर्षेऽगात्तत्र च त्रिजगत्प्रभुः । उद्यानेऽस्थात्प्रतिमया माघमासस्तदा त्वभूत् ॥ ६१४ ॥
वाणमन्तरिका तत्र नामतः कटपूतना । त्रिपृष्ठजन्मनि विष्णोः पत्नी विजयवत्यभूत् ॥ ६१५ ॥

१ निरन्तरम् । २ कर्मार., लोहकार. । ३ नीरोगताम् । ४ अयसो लोहस्य घनम् ।

सम्यगप्र[1]तिचरिता सामर्षा च सती मृता । भ्रान्त्वा भवान् सा मानुष्यं प्राप्य बालतपोऽकरोत् ॥६१६॥
सा तत्र व्यन्तरीभूता स्वामिनः पूर्ववैरतः । तेजोऽसहिष्णुर्व्यकरोत्तापसीरूपमग्रतः ॥ ६१७ ॥
जटाभृद्वल्कलधरां हिमशीतेन पाथसा[2] । आर्द्रयित्वा वपुस्तस्थावुपरिष्टाज्जगत्प्रभोः ॥ ६१८ ॥
ततो वातं विकृत्याङ्गान्यधुनोच्छल्लकी[3]व सा । जिने पेतुः[5] शलानी[4]व दुःसहाम्बुबिन्दवः ॥ ६१९ ॥
जटाग्राद्वल्कलाग्राच्च पतन्तस्तोयबिन्दवः । चिक्लिशुर्नाथमन्यश्चेद्भवेन्नूनं स्फुटेत्तदा ॥ ६२० ॥
भर्तुः शीतोपसर्गं तं सहमानस्य तां निशाम् । विशेषात् कर्मक्षपणं धर्मध्यानमदीप्यत ॥ ६२१ ॥
बभूव चावधिज्ञानं श्रीवीरस्वामिनोऽधिकम् । अनुत्तरस्थितस्यैव सर्वलोकावलोकनम् ॥ ६२२ ॥
सहजं त्ववधिज्ञानं यावद्देवभवेऽभवत् । एकादशांगीसूत्रार्थभृत्त्वं च चरमार्हतः ॥ ६२३ ॥
शान्ता निशान्ते सा सा[6]नुतापा च कटपूतना । पूजयित्वा प्रभुं भक्त्या निजं स्थानमुपाययौ ॥ ६२४ ॥
अथ गत्वा भद्रिकायां पुर्यां तस्थौ तपःपरः । दीक्षायाः प्रावृषं षष्ठीमतिवाहयितुं प्रभुः ॥ ६२५ ॥
गोशालस्तत्र मिलितः षष्ठमासाज्जगद्गुरोः । सेवां कुर्वन् प्राग्वदस्थात् प्रत्यहं प्रीतमानसः ॥ ६२६ ॥
विविधाभिग्रहपूर्वकं चतुर्मासक्षपणं तत्र च प्रभुः । कृत्वा वर्षारात्रनिर्गमे विदधे पारणकं पुरो बहिः ६२७

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये दशमे पर्वणि श्रीमहावीरप्रथमषड्वर्षछद्मस्थविहार-
वर्णनो नाम तृतीयः सर्गः ॥

१ असंतोषिता । २ जलेन । ३ शल्लकी भाषायां "शाहुडी" इति । ४ शलानि शल्लकीपिच्छानि भाषायां "सीसोलीयां" ।
५ बाधयामासुः । ६ पश्चात्तापसहिता ।

## ॥ चतुर्थः सर्गः ॥

अथ स्वामी महावीरो गोशालेनानुसेवितः । मासानष्टा[1]नुपसर्गं व्यहार्षीन्मगधावनौ ॥ १ ॥
पुरीमालम्भिकां गत्वा सप्तमीं प्रावृषं प्रभुः । चतुर्मासक्षपणभृद्वीरस्वाम्यत्यवाहयत् ॥ २ ॥
चतुर्मासावसाने च पारयित्वा बहिः प्रभुः । गोशालसंयुतोऽगच्छत् कुंडके सन्निवेशने ॥ ३ ॥
तत्र स्वामी वासुदेवायतनस्यैककोणके । तस्थौ प्रतिमया रत्नप्रतिमेव [2]निवेशिता ॥ ४ ॥
नि[3]र्ह्रीः प्रकृत्या गोशालश्चिरसंलीनतातुरः । न्यस्य विष्णुप्रतिमास्येऽधिष्ठा[4]नं समवास्थित ॥ ५ ॥
आयातश्चार्चको दृष्ट्वा तं तथास्थमचिन्तयत् । पिशाचः कोऽप्यसौ नूनं ग्रहा[5]त्तः कोऽपि वा भवेत् ॥ ६ ॥
एवं विचिन्त्यायतने प्रविष्टस्तं निरीक्ष्य सः । नग्नत्वाद्ब्राह्मणो मन्ये कोऽप्यसावित्यलक्षयत् ॥ ७ ॥
एवं दध्यौ च यद्येनं हनिष्यामि तदा जनः । वदिष्यत्यमुना दुष्टेनादोषो धार्मिको हतः ॥ ८ ॥
करोतु ग्राम एवास्योचितमाख्यामि तत्पुरः । इति गत्वा समानैषीद्ग्राम्यांस्तद्दर्शनाय सः ॥ ९ ॥
॥ युग्मम् ॥
चपेटाभिर्मुष्टिभिश्च स जघ्ने ग्राम्यदारकैः । हत्वामुं [6]ग्रहिलमलमिति वृद्धैरमोच्यत ॥ १० ॥
कर्मारिमर्दनः स्वामी मर्दनाख्ये निवेशने । गत्वा चास्थात्प्रतिमया बलदेवनिकेतने ॥ ११ ॥

---

१ उपसर्गरहितम् । २ स्थापिता । ३ निर्लज्जः । ४ लिंगम् । ५ ग्रहगृहीतः । ६ ग्रहगृहीतम् ।

लिंगं बलमुखे दत्वा गोशालोऽस्थाच्च पूर्ववत् । पूर्ववत् कुट्टितो ग्राम्यैः पूर्ववच्च विमोचितः ॥ १२ ॥
ग्रामेऽगाद्धहुशालाख्ये तपःशाली[1] जगद्गुरुः । तत्र शालवनोद्याने तस्थौ च प्रतिमाधरः ॥ १३ ॥
शालाया नामतस्तत्र व्यन्तरी कारणं विना । क्रुद्धोपसर्गानकरोत् स्वामिनः कर्मघातकान् ॥ १४ ॥
सा श्रान्ता नाथमानर्च नाथोऽपि विहरन् ययौ । पुरं लोहार्गलं राज्ञाधिष्ठितं जितशत्रुणा ॥ १५ ॥
तस्य राज्ञोऽन्येन राज्ञा विरोधः समभूत्तदा । आयान् स्वामी सगोशालस्तत्पुंभिश्च पथीक्षितः ॥ १६ ॥
नोचे किंचिद्यदा स्वामी पृष्टस्तै राजपूरुषैः[2] । तदानीं हेरिक इति जितशत्रोः समर्पितः ॥ १७ ॥
पूर्वायातोऽस्थिकग्रामादुत्पलो नाथमैक्षत । ववन्दे च यथावस्थं जितशत्रोः शशंस च ॥ १८ ॥
राज्ञापि वन्दितो भक्त्या विहरन् भगवान् ययौ । पुरे पुरिमतालाख्ये तत्र चेदं पुराभवत् ॥ १९ ॥
तत्रासीद्वागुरः श्रेष्ठी धनी भद्रा च तत्प्रिया । वन्ध्या श्रान्ता सुतकृते दत्तैर्देवोपयाचितैः ॥ २० ॥
श्रेष्ठिनौ[3] शकटमुखोद्याने तावन्यदा गतौ । चिरं चिक्रीडतुर्देवाविव पुष्पोच्चयादिना ॥ २१ ॥
भ्रमन्तौ क्रीडया तत्र जीर्णमायतनं महत् । दृष्ट्वा कौतूहलान्मध्येऽविशतां तावुभावपि ॥ २२ ॥
प्रतिमां मल्लिनाथस्य सुधावर्तिनिभां[4] दृशोः । अपश्यतां दंपती तौ श्रद्धापूर्वं च नेमतुः ॥ २३ ॥
तावूचतुर्देव यदि त्वत्प्रसादाद्भविष्यति । सुतः सुता वा तच्चैत्यमुद्धरिष्यावहे तव ॥ २४ ॥
त्वद्भक्तौ च भविष्यावस्ततः प्रभृति सर्वदा । इत्युदित्वा जग्मतुस्तौ श्रेष्ठिनौ निजमन्दिरम् ॥ २५ ॥

१ तपसा शोभमानः । २ राजपुरुषैः । ३ श्रेष्ठी च श्रेष्ठिनी चेत्येकशेषः । ४ अमृतवर्तिकासदृशीम् ।

तत्रासन्नार्हतव्यन्तर्यनुभावेन चाभवत् । भद्राया उदरे गर्भः श्रेष्ठिनः प्रत्ययप्रदः[1] ॥ २६ ॥
गर्भाहादपि चारभ्य प्रारेभे वागुरो मुदा । तद्देवकुलमुद्धर्तुमात्मानमिव दुर्गतेः ॥ २७ ॥
तत्र गत्वा स्वयं मल्लिप्रतिमायाश्च वागुरः । त्रिसन्ध्यं विदधे पूजां गृहीताभिग्रहः सुधीः ॥ २८ ॥
तं ज्ञात्वा जिनभक्तं तु तद्वेश्मनि समाययुः । विहर्तुं साधवः साध्व्यः सोऽप्यानर्च सदैव तान् ॥ २९ ॥
साधूनां नित्यसंसर्गाच्छ्रेष्ठिनौ श्रेष्ठबुद्धिकौ । श्रावकत्वं प्रपेदाते विधिज्ञौ च बभूवतुः ॥ ३० ॥
इतश्च भगवान् वीरस्तस्थौ प्रतिमया स्थिरः । अन्तरे शकटमुखोद्यानस्य च पुरस्य च ॥ ३१ ॥
तत्र वन्दितुमायात ईशानेन्द्रो जिनेश्वरम् । ददर्श वागुरं यान्तं मल्लिबिंबार्चनेच्छया ॥ ३२ ॥
ईशानो वागुरं चोचे किं प्रत्यक्षं जिनेश्वरम् । अतिक्रम्याग्रतो यासि तद्बिंबार्चनहेतवे ॥ ३३ ॥
अयं हि भगवान् वीरश्चरमस्तीर्थकृत्स्वयम् । छद्मस्थो विहरन्नत्र वर्तते प्रतिमास्थितः ॥ ३४ ॥
मिथ्यादुष्कृतमित्युक्त्वा त्रिश्च कृत्वा प्रदक्षिणाम् । स ववन्दे विभुं भक्त्या कूर्मवत्संकुचत्तनुः ॥ ३५ ॥
ईशानो वागुरश्चेशं नत्वा द्वावपि जग्मतुः । उष्णाकं सन्निवेशं च प्रत्यगाद्भगवानपि ॥ ३६ ॥
गच्छतः स्वामिनोऽभूतां संमुखीनौ वधूवरौ । तत्कालजातवीवाहौ सर्वतो विकृताकृती ॥ ३७ ॥
प्रेक्ष्य गोशालकोऽवोचदहो द्वावपि तुन्दिलौ[2] । दन्तुरौ दीर्घचिबुकग्रीवौ चिल्लौ[3] कुनासिकौ ॥ ३८ ॥
अहो संयोजनौचित्यं विधातुर्यदिमावुभौ । कृतौ वधूवरत्वेन मन्ये सोऽपि कुतूहली ॥ ३९ ॥
एवमग्रे तयोर्भूत्वा भूयो भूयो जगाद सः । अट्टहासं च विदधे वैहासिक[4] इवासकृत् ॥ ४० ॥

१ विश्वासप्रदः । २ बृहदुदरौ । ३ क्लिन्ननेत्रौ । ४ विदूषकः

बभूवुस्तन्नराः क्रुद्धास्तं तस्करमिव द्रुतम् । बद्ध्वा मयूरबन्धेन चिक्षिपुर्वंशगह्वरे ॥ ४१ ॥
गोशालोऽप्यूचे स्वामिन् किं मां बद्धमुपेक्षसे । कृपालुस्त्वं परजनेऽप्यसि किं न हि सेवके ॥ ४२ ॥
तं बभाषे च सिद्धार्थो नलसिद्धा विपत्ति ते । निजदुश्चरितैरेव चापलस्य फलेरिति ॥ ४३ ॥
स्वाम्यप्यदूरे गत्वास्थात्तत्प्रतीक्षणकाम्यया । बभूवुस्तन्नरा नाथं प्रेक्ष्य तं व्यसर्जयन् ॥ ४४ ॥
पीतच्छूलबन्धूत्यासौ मत्वान्योऽप्यस्य सेवकः । देवार्यस्य तपोराशेर्यदेषोऽमुं प्रतीक्षते ॥ ४५ ॥
एवं विचिन्त्य तेऽमुञ्चन् गोशालं स्वामिप्रेक्षया । समं तेन व्रजन् स्वामी क्रमाद्गोभूमिमागमत् ॥ ४६ ॥
गोशाल ऊचे गोपालान्म्लेच्छा बीभत्समूर्तयः । अंजशृंगा व्रजतां क पन्थाः कथयन्तु नः ॥ ४७ ॥
प्रत्यूचिरे च गोपालाः किमस्मान् कारणं विना । आक्रोशसीत्यधन्येन भद्रशर्मा नासि नः सखा ॥ ४८ ॥
गोशालोऽप्यब्रवीत्क्रूरो दासेराः पशुपुत्रकाः । यद्विन्मध्ये न वेत्यूयमाक्रोशस्याभिधां तदा ॥ ४९ ॥
स्वभावाख्यानमेतद्वो नाक्रोशोऽयं मया कृतः । किं यूयं म्लेच्छबीभत्सा इत्यलीकं मयोदितम् ॥ ५० ॥
ते क्रुद्धाः कुट्टयित्वा तं बद्ध्वा वंशवनेऽक्षिपन् । अमोचयंश्च पथिकास्तमन्ये करुणापराः ॥ ५१ ॥
स्वामी राजगृहे गत्वा वर्षारात्रमथाष्टमम् । चातुर्मासक्षपणकृद्विविधाभिग्रहोऽकरोत् ॥ ५२ ॥
चतुर्मासावसाने तु स्वामी बहिरपारयत् । निर्जर्यं कर्म मेऽद्यापि बह्वस्तीति व्यचिन्तयत् ॥ ५३ ॥
वज्रभूमिशुद्धभूमिलाटादिम्लेच्छभूमिषु । कर्मनिर्जरणायागात् स्वामी गोशालकान्वितः ॥ ५४ ॥
स्वच्छन्दं तत्र च म्लेच्छाः परमाधार्मिकोपमाः । नानाविधैरुपसर्गैः श्रीवीरमुपजद्रुवुः ॥ ५५ ॥

१ स्वाम्यपेक्षयेति वा पाठः । २ अज एव शृगालसंबोधनम् । ३ हे पान्थ । ४ पशुपाः । ५ दासीपुत्राः ।

जगर्हुः स्वामिनं केऽपि जहसुः केचिदुच्चकैः । सारसेयादिभिर्दुष्टसत्त्वैः केचिदवेष्टयन् ॥ ५६ ॥
स्वामी कर्मध्वंसकत्वादुपसर्गैर्जहर्ष तैः । शल्यार्दित इव च्छेदैः शल्योद्धरणहेतुभिः ॥ ५७ ॥
कर्मक्षयसहायांस्तान्म्लेच्छान् बन्धूनिव प्रभुः । मेने ततोऽधिकान् वापि कर्मरोगभिषक् स्वयम् ॥ ५८ ॥
चकंपे चाचलो मेरुर्यत्पादांगुष्ठपीडनात् । कर्मभिः पीड्यमानः सोऽप्येवं वीरो व्यवर्तत ॥ ५९ ॥
शक्रेणापभिषेधाय यः सिद्धार्थो न्ययुज्यत । गोशालोत्तरवेलायां जज्ञे सोऽपि नान्यदा ॥ ६० ॥
यत्पादान्ते किंकरन्ति[1] लुठन्ति च मुहुर्मुहुः । सुरेन्द्रास्तेऽपि हा सर्वे तत्पीडायामुदासते ॥ ६१ ॥
यन्नाममंत्रमात्रेण द्रवन्ति दुरुपद्रवाः । सोऽप्युपद्रूयते क्षुद्रैः कस्य पूत्कुर्महे पुरः ॥ ६२ ॥
धिक् सुकृतानि जगतो यैः स्वामिप्रभवैरपि । कृतघ्नैर्विघ्ननिघ्नात्मा[2] स्वामी त्रातो न दुर्विधेः[3] ॥ ६३ ॥
जगत्त्राणक्षयसहं न स्वौजो[4]ऽप्याददत प्रभुः । स्वौजःफलं हि गृह्णन्ति संसारसुखगृध्नवः[5] ॥ ६४ ॥
अनाप्नुवन् वसतिमप्युष्णशीतादिभाजनम् । धर्मजागरिकां जाग्रत् षण्मासान् स्वाम्यवास्थित ॥ ६५ ॥
नवमीं प्रावृषं तत्र धर्मध्यानपरायणः । शून्यागारे द्रुतले[6] वा स्थितः स्वाम्यत्यवाहयत् ॥ ६६ ॥
सगोशालस्ततः स्वामी सिद्धार्थपुरमाययौ । ततोऽपि प्राचलद्ग्रामं कूर्मग्रामाभिधं प्रति ॥ ६७ ॥
मार्गे दृष्ट्वा तिलस्तंबं गोशालः प्रभुमभ्यधात् । स्वामिन्नेष तिलस्तंबः कच्चिन्निष्पत्स्यते न वा ॥ ६८ ॥
ततो भवितव्यताया वशेन भगवानपि । त्यक्त्वा मौनं स्वयमाख्यद्भद्र निष्पत्स्यते ह्यसौ ॥ ६९ ॥

---

१ किंकरा इव आचरन्ति । २ विघ्नैर्निघ्नो हत आत्मा यस्य सः । ३ दुर्दैवात् । ४ स्वबलम् । ५ ससार-सुखलोलुपाः । ६ वृक्षतले ।

वधूवरनराः क्रुद्धास्तं तस्करमिव द्रुतम् । बद्धा मयूरबन्धेन चिक्षिपुर्वंशगह्वरे ॥ ४१ ॥
गोशालोऽवोचत स्वामिन् किं मां बद्धमुपेक्षसे । कृपालुस्त्वं परजनेऽप्यसि किं न हि सेवके ॥ ४२ ॥
तं बभाषे च सिद्धार्थो नत्यसिद्धा विपद्धि ते । निजदुश्चरितैरेव चपलस्य कपेरिव ॥ ४३ ॥
स्वाम्यप्यदूरे गत्वास्थात्तत्प्रतीक्षणकाम्यया । वधूवरनरा नाथं प्रेक्ष्य चैवं व्यचिन्तयन् ॥ ४४ ॥
पीठभृच्छत्रभृद्वासौ यद्वान्योऽप्यस्य सेवकः । देवार्यस्य तपोराशेर्यदेषोऽमुं प्रतीक्षते ॥ ४५ ॥
एवं विचिन्त्य तेऽमुञ्चन् गोशालं स्वामिप्रेक्षया[1] । समं तेन व्रजन् स्वामी क्रमाद्गोभूमिमासदत् ॥ ४६ ॥
गोशाल ऊचे गोपालान्म्लेच्छा बीभत्समूर्तयः । व्रजशूरा[2] व्रजत्येष क्व पन्थाः कथयन्तु भोः ॥ ४७ ॥
प्रत्यूचिरे च गोपालाः किमस्मान् कारणं विना । आक्रोशस्येवमध्वन्य[3] श्वशुर्यो[4] नासि नः खलु ॥ ४८ ॥
गोशालोऽप्यब्रवीद्भूयो दासेराः[5] पशुपुत्रकाः । सहिष्यध्वे न चेद्यूयमाक्रोक्ष्याम्यधिकं तदा ॥ ४९ ॥
स्वभावाख्यानमेतद्वो नाक्रोशोऽयं मया कृतः । किं यूयं म्लेच्छबीभत्सा इत्यलीकं मयोदितम् ॥ ५० ॥
ते क्रुद्धाः कुट्टयित्वा तं बद्धा वंशवनेऽक्षिपन् । अमोचयंश्च पथिकास्तमन्ये करुणापराः ॥ ५१ ॥
स्वामी राजगृहे गत्वा वर्षारात्रमथाष्टमम् । चतुर्मासक्षपणभृद्विविधाभिग्रहोऽकरोत् ॥ ५२ ॥
चतुर्मासावसाने तु स्वामी बहिरपारयत् । निर्जर्यं कर्म मेऽद्यापि बह्वस्तीति व्यचिन्तयत् ॥ ५३ ॥
वज्रभूमिशुद्धभूमिलाटादिम्लेच्छभूमिषु । कर्मनिर्जरणायागात् स्वामी गोशालकान्वितः ॥ ५४ ॥
स्वच्छन्दं तत्र च म्लेच्छाः परमाधार्मिकोपमाः । नानाविधैरुपसर्गैः श्रीवीरमुपदुद्रुवुः ॥ ५५ ॥

१ स्वाम्यपेक्षयेति वा पाठः । २ व्रज एव शूरास्तत्संबोधनम् । ३ हे पान्थ । ४ श्वशुरपुत्रः । ५ हे दासीपुत्राः ।

जगर्हुः स्वामिनं केऽपि जहसुः केचिदुच्चकैः । सारमेयादिभिर्दुष्टसत्वैः केचिदवेष्टयन् ॥ ५६ ॥
स्वामी कर्मध्वंसकत्वादुपसर्गैर्जहर्ष तैः । शल्यार्दित इव च्छेदैः शल्योद्धरणहेतुभिः ॥ ५७ ॥
कर्मक्षयसहायांस्तान्म्लेच्छान् बन्धूनिव प्रभुः । मेने ततोऽधिकान् वापि कर्मरोगभिषक् स्वयम् ॥ ५८ ॥
चकंपे चाचलो मेरुर्यत्पादांगुष्ठपीडनात् । कर्मभिः पीड्यमानः सोऽप्येवं वीरो व्यवर्तत ॥ ५९ ॥
शक्रेणापभिषेधाय यः सिद्धार्थो न्ययुज्यत । गोशालोत्तरवेलायां जज्ञे सोऽपि नान्यदा ॥ ६० ॥
यत्पादान्ते किंकरन्ति[1] लुठन्ति च मुहुर्मुहुः । सुरेन्द्रास्तेऽपि हा सर्वे तत्पीडायामुदासते ॥ ६१ ॥
यन्नाममंत्रमात्रेण भवन्ति दुरुपद्रवाः । सोऽप्युपद्रूयते क्षुद्रैः कस्य पूत्कुर्महे पुरः ॥ ६२ ॥
धिक् सुकृतानि जगतो यैः स्वामिप्रभवैरपि । कृतघ्नैर्विघ्ननिघ्नात्मा[2] स्वामी त्रातो न दुर्विधेः[3] ॥ ६३ ॥
जगत्त्राणक्षयसहं न स्वौजो[4]ऽप्यादृत प्रभुः । स्वौजःफलं हि गृह्णन्ति संसारसुखगृध्नवः[5] ॥ ६४ ॥
अनाप्नुवन् वसतिमप्युष्णशीतादिभाजनम् । धर्मजागरिकां जाग्रत् षण्मासान् स्वाम्यवास्थित ॥ ६५ ॥
नवमीं प्रावृषं तत्र धर्मध्यानपरायणः । शून्यागारे द्रुतले[6] वा स्थितः स्वाम्यत्यवाहयत् ॥ ६६ ॥
सगोशालस्ततः स्वामी सिद्धार्थपुरमाययौ । ततोऽपि प्राचलद्ग्रामं कूर्मग्रामाभिधं प्रति ॥ ६७ ॥
मार्गे दृष्ट्वा तिलस्तंबं गोशालः प्रभुमभ्यधात् । स्वामिन्नेष तिलस्तंबः कच्चिन्निष्पत्स्यते न वा ॥ ६८ ॥
ततो भवितव्यताया वशेन भगवानपि । त्यक्त्वा मौनं स्वयमाख्यद्भद्र निष्पत्स्यते ह्यसौ ॥ ६९ ॥

१ किंकरा इव आचरन्ति । २ विघ्नैर्निघ्नो हत आत्मा यस्य सः । ३ दुर्दैवात् । ४ स्वबलम् । ५ संसारसुखलोलुपाः । ६ वृक्षतले ।

सप्तापि पुष्पजीवास्तु परमस्मिन्नवस्थिताः । एकस्मिन्नेव शिंबायां[1] तावन्तो भाविनस्तिलाः ॥ ७० ॥
तद्वचोऽश्रद्दधानेन गोशालेनोदखानि सः । तिलस्तंबः समृत्पिंडो मुमुचे चान्यतः क्वचित् ॥ ७१ ॥
असत्या स्वामिवाङ्मा भूदित्यासन्नसुरैस्तदा । वारिवृष्टिर्विचक्रे द्राक् तिलस्तंबोऽप्युदश्वसत् ॥ ७२ ॥
तत्प्रदेशेन गच्छन्त्या गोराक्रान्तः खुरेण सः । प्रविष्टः क्लिन्नभूमध्ये[2] सुप्रतिष्ठोऽभवत्ततः ॥ ७३ ॥
क्रमात्प्ररूढमूलोऽभूत् क्रमाच्चोद्भिन्नकंदलः[3] । प्रावर्तन्त तिलस्तंबे तानि पुष्पाणि वर्धितुम् ॥ ७४ ॥
गोशालेनान्वीयमानो दुर्धिया भक्तमानिना[4] । कूर्मग्रामाभिधे ग्रामे जगाम भगवानपि ॥ ७५ ॥
इतश्चास्ति धनापूर्णचंपाराजगृहान्तरे । नामतो गोबरग्रामो महीमंडलमंडनम् ॥ ७६ ॥
कुटुंबी तत्र गोशंखी नामाभीराधिपोऽभवत् । वन्ध्या बन्धवती नाम भार्या तस्यातिवल्लभा ॥ ७७ ॥
ग्रामस्य तस्य चासन्नो ग्रामः खेटकनामकः । हतो दस्युभिरभ्येत्य बन्दा जगृहिरेऽपि च ॥ ७८ ॥
तदा च वेशिका नाम तत्र स्त्री सुषुवे सुतम् । हते पत्यौ सुरूपेति दस्युभिश्चालिता च सा ॥ ७९ ॥
सा तु प्रसवरोगार्ता बालपाणिः शशाक न । गन्तुं तैर्वेगिभिश्चौरैर्गौर्दुर्दान्तवृषैरिव ॥ ८० ॥
अथ तामूचिरे चौरा यदि त्वं जीवितार्थिनी । तदेनं बालकं मुञ्च मूर्तं व्याधिमिवात्मनः ॥ ८१ ॥
साऽर्भं तरुतले मुक्त्वा भीतागाद्दस्युभिः समम् । सर्वस्यापि हि लोकस्य न प्राणेभ्योऽपरं प्रियम् ॥ ८२ ॥
प्रभाते सह गोरूपैर्गोशंखी तत्र चागतः । ईक्षांचक्रे बालकं तं सुरूप इति चाग्रहीत् ॥ ८३ ॥
निजपत्न्याः सुतत्वेन स तं बालकमार्पयत् । अन्यपुत्रोऽप्यपुत्राणां भवत्यत्यन्तवल्लभः ॥ ८४ ॥

१ शिंबा भाषायां "शींग" इति ख्यातम् । २ आर्द्रपृथ्वीमध्ये । ३ उद्गतांकुरः । ४ आत्मान भक्त मन्यते तेन ।

छागं निहत्य रक्तेन मिश्रं चक्रे स वालकम् । पत्न्या च सू[1]तिनेपथ्यं ग्राहयामास बुद्धिमान् ॥ ८५ ॥
मद्भार्या गूढगर्भासीत् सा सुतं सुषुवेऽधुना । प्रावादीदिति लोके स चकार च महोत्सवम् ॥ ८६ ॥
तन्माता वेशिका चौरैश्चंपापुर्यां चतुष्पथे । अवास्थाप्यत विक्रेतुं क्रीता योग्येति वेश्यया ॥ ८७ ॥
गणिकाव्यवहारं सा शिक्षिता वेश्यया तया । प्रसिद्धगणिका जज्ञे रू[2]पावगणिताप्सराः ॥ ८८ ॥
क्रमेण तरुणीभूतो गोशंखिकसुतोऽपि हि । विक्रेतुं घृतशकटं चंपायां ससुहृद्ययौ ॥ ८९ ॥
पौरान् विलसतस्तत्र विदग्[3]धरमणीवृतान् । सोऽपि दृष्ट्वा रन्तुमिच्छुर्गणिकापाटकं ययौ ॥ ९० ॥
ददर्श वेशिकां वेश्यामध्यस्थां स स्वमातरम् । तामेवैच्छद्रमयितुमज्ञा हि पशुवज्जनाः ॥ ९१ ॥
अदापयद्[4]ग्रहणकं तस्या एव तदैव सः । निशि स्ना[5]तविलिप्तांगस्तद्गृहाय चचाल च ॥ ९२ ॥
पादः शकृ[6]ति निर्मग्नो गच्छतस्तस्य वर्त्मनि । न सोऽज्ञासीत् क्वचिन्मग्न इति स्मरविमोहितः ॥ ९३ ॥
तं प्रबोधयितुं सद्यस्तदीया कुलदेवता । विकृत्य गां च वत्सं चान्तरा तस्थौ तदध्वनः ॥ ९४ ॥
वत्से घर्षितुमारेभे यावत् सोंऽघ्रिं पुरीषिणम् । वत्सः स तावन्मानुष्या वाचा गामित्यवोचत ॥ ९५ ॥
मातः पश्यायमह्रीकैः[7] पुंस्पशुर्धर्मवर्जितः । शकृल्लिप्तं निजं पादं मयि घर्षति निर्घृ[8]णः ॥ ९६ ॥
गौरप्युवाच मा ताम्य नाकृत्यं किञ्चिदस्य हि । निजां यो जननीं रन्तुं त्वरते कामगर्दभः ॥ ९७ ॥
तच्छ्रुत्वाचिन्तयत्सोऽपि गावो नरगिराः कथम् । वदन्त्यमुष्या वेश्यायाः सूनुरस्मि कथं नु वा ॥ ९८ ॥

---

१ सूतिकावेषम् । २ रूपेण तिरस्कृता अप्सरसो यया सा । ३ सुदरस्त्रीवृतान् । ४ अगीकरणे मूल्यादिकम् । ५ आदौ स्नातं पश्चाद्विलिप्तं स्नातानुलिप्तमग येन सः । ६ पुरीषे । ७ निर्लज्जः । ८ निर्दयः ।

प्रेक्षामि वेश्यां तामेवेत्यालोच्यागात्तदोकसि । अभ्युत्थानादिना तस्य प्रतिपत्तिं व्यधाच्च सा ॥ ९९ ॥
निरुद्धकामव्यापारः साशंको गोगिराथ सः । स्थित्वा क्षणमवोचत्तां पारंपर्यं निजं वद ॥ १०० ॥
साऽनाकर्णितकं कृत्वा हावभावानदर्शयत् । इदं हि पण्यनारीणां मुख्यं मन्मथशासनम् ॥ १०१ ॥
सोऽप्यवोचत दास्यामि जल्पितद्विगुणं धनम् । स्वकीयं ब्रूहि सद्भावं स्वपित्रोः शपथश्च ते ॥ १०२ ॥
एवं मुहुर्मुहुस्तेन पृष्टा साख्यद्यथातथम् । साशंकः सोऽपि चोत्थाय जगाम ग्राममात्मनः ॥ १०३ ॥
सोऽपृच्छत् पितरौ तत्र युवयोरंगजोऽस्मि किम् । लब्धः क्रीतोऽथवान्यो वा कथ्यतां मे यथातथम्॥१०४
आवयोरंगजोऽसीति यदा तौ हि जजल्पतुः । तदा सोऽनैशितस्तस्थावयथाख्यानपीडितः ॥ १०५ ॥
यथातथमथाख्यातां तत्प्राप्तिं पितरावपि । अज्ञासीद्वेशिकां वेश्यां सोऽपि मातरमात्मनः ॥ १०६ ॥
गत्वा चंपां वेशिकायाः स्ववृत्तान्तं शशंस सः । सापि तं स्वसुतं ज्ञात्वा रुरोद न्यग्मुखी ह्रिया ॥१०७॥
अमोचयच्च कुट्टिन्या द्रव्यं दत्वा स्वमातरम् । ग्रामे नीत्वा निजेऽमुञ्चद्धर्मे चास्थापयत् पथि ॥ १०८ ॥
वेशिकासूनुरित्यासीत्स नाम्ना वैशिकायनः । तदैव विषयोद्विग्न आददे तापसव्रतम् ॥ १०९ ॥
स्वशास्त्राध्ययनपरः स्वधर्मकुशलः क्रमात् । कूर्मग्रामे स आगच्छच्छ्रीवीरागमनाग्रतः ॥ ११० ॥
तद्बहिश्चोर्ध्वदोर्दण्डः सूर्यमंडलदत्तदृक् । लंबमानजटाभारो न्यग्रोधद्रुरिव स्थिरः ॥ १११ ॥
निसर्गतो विनीतात्मा दयादाक्षिण्यवान् शमी । आतापनां स मध्याह्ने धर्मध्यानस्थितोऽकरोत् ॥११२॥
आदित्यकरतापेन यूका निपतिता भुवि । ग्राहं ग्राहं स चिक्षेप भूयो मूर्ध्नि कृपानिधिः ॥ ११३ ॥

१ अगाज्जातः । २ भोजनरहितः । ३ अधोमुखी । ४ भारः समूहः । ५ वटवृक्षः । ६ सूर्यकिरणाना तापेन । ७ गृहीत्वा गृहीत्वा ।

तं चावलोक्य गोशालः स्वामिपार्श्वादुपेत्य च । ऊचे जानासि किं तत्त्वं यूकाशय्यातरोऽसि वा ॥११४॥
योषिद्वा पुरुषो वासि सम्यग्विज्ञायसे न हि । इत्युक्तोऽपि तपस्वी स क्षमी नोवाच किञ्चन ॥ ११५ ॥
भूयो भूयोऽपि गोशालस्तथैव तमभाषत । यत्नेऽपि बहुशः क्षिप्तं श्वपुच्छम[1]नृजूभवेत् ॥ ११६ ॥
तापसः स चुकोपाथ तेजोलेश्यां मुमोच च । अत्यन्तघृष्टाद्[2]दहनश्चन्दनादपि जायते ॥ ११७ ॥
तस्या ज्वालाकरालाया भीतो गोशालको ययौ । अभि प्रभुं दवत्रस्तोऽभिनदीव वनद्विपः ॥ ११८ ॥
त्रातुं गोशालकं स्वामी शीतलेश्यामथामुचत् । तेजोलेश्या तयाशामि वारिणेव हुताशनः ॥ ११९ ॥
तामृद्धिं स्वामिनः प्रेक्ष्य विस्मितो वैशिकायनः । समुपेत्य महावीरं स[3]प्रश्रयमदोऽवदत् ॥ १२० ॥
न ज्ञातो भवतामेष भगवन्[4]न्तिषज्जनः । तत्सहध्वमिहेदं [5]प्रतीपाचरणं मम ॥ १२१ ॥
एवमुक्त्वा गते तस्मिन् प्रभुं गोशालकोऽवदत् । तेजोलेश्यालब्धिरियं जायते भगवन् कथम् ॥१२२॥
स्वाभ्याख्यत्सर्वदा षष्ठं विदध्याद्यश्च पारयेत् । [6]यमी स[7]नखकुल्माषमुष्ट्याम्बुचुलुकेन च ॥ १२३ ॥
तस्य षण्मासपर्यन्ते तेजोलेश्या गरीयसी । उत्पद्येतास्खलनीया [8]प्रतिपक्षभयंकरा ॥ १२४ ॥
कूर्मग्रामाच्च गोशालेनान्वितः परमेश्वरः । प्रतस्थे प्रतिसिद्धार्थपुराख्यं नगरोत्तमम् ॥ १२५ ॥
संप्राप्ते तत्तिलस्तंबदेशे गोशालकोऽवदत् । न निष्पन्नस्तिलस्तंबो यः स्वामिन्निरुदीरितः ॥ १२६ ॥
स्वाभ्याचख्यौ तिलस्तंबो निष्पन्नः सोऽत्र विद्यते । गोशालोऽश्रद्दधत्तत्र तिलशिंबां व्यदारयत् ॥१२७॥

---

१ असरलीभवेत् । २ अग्निः । ३ सविनयम् । ४ शिष्यः । ५ विरुद्धाचरणम् । ६ नियमवान् । ७ सतुषकुलमाषधान्यमुष्ट्या । ८ शत्रुभयकरा ।

तत्र सप्ततिलान्पश्यन्नेवं गोशालकोऽवदत् । जायन्तेऽङ्गे परावृत्य पुनस्तत्रैव जन्तवः ॥ १२८ ॥
तेजोलेश्यां स्वाम्याख्यातां स साधयितुमन्यदा । स्वामिपादान् परित्यज्य श्रावस्तीं नगरीं ययौ ॥१२९॥
स कुम्भकारशालायां स्थितः षाण्मासिकं तपः । अन्वतिष्ठद्यथाख्यातं तेजोलेश्या सिषेध च ॥ १३० ॥
तेजोलेश्यापरीक्षार्थं स गत्वा कूपकंठके[1] । स्वस्य कोपकृते दास्याः कर्करेणाभिनद्घटम् ॥ १३१ ॥
सा तमाक्रोष्टुमारेभे तेनापि मुमुचे क्षणात् । तेजोलेश्या तडिदिव च्युता दासीं ददाह सा ॥ १३२ ॥
संजातप्रत्ययश्चैवं कौतुकालोकनप्रियः । गोशालको वृतो लोकैर्विहर्तुमुपचक्रमे ॥ १३३ ॥
श्रीपार्श्वशिष्या अष्टांगनिमित्तज्ञानपण्डिताः । गोशालकस्य मिलिताः षडमी प्रोज्झितव्रताः ॥ १३४ ॥
नाम्ना शोणः कलिन्दोऽन्यः कर्णिकारोऽपरः पुनः । अच्छिद्रोऽथाग्निवेशानोऽथार्जुनः पञ्चमोत्तरः[2] ॥१३५॥
तेऽप्याख्युरष्टांगमहानिमित्तं तस्य सौहृदात् । पुंसां समानशीलानां सद्यो भवति सौहृदम् ॥ १३६ ॥
तेजोलेश्याष्टांगमहानिमित्तज्ञानगर्वितः । अर्हं जिनोऽस्मीति वदन् वसुधां विजहार सः ॥ १३७ ॥
नाथोऽपि सिद्धार्थपुराद्वैशालीं नगरीं ययौ । शंखः पितृसुहृत्तत्राभ्यानर्च गणराट् प्रभुम् ॥ १३८ ॥
ततः प्रतस्थे भगवान् ग्रामं वाणिजकं प्रति । मार्गे मंडिकिकां नाम नदीं नावोत्ततार च ॥ १३९ ॥
उत्तीर्णमात्रो भगवान् सैकते[3] तप्तवालुके । अधारि नाविकैर्नद्युत्तारणद्रविणार्थिभिः ॥ १४० ॥
तदा च शंखगणराड्जामेयश्चित्रनामकः[4] । नौसैन्येनागतो दूतो निवृत्तः प्रभुमैक्षत ॥ १४१ ॥
भर्त्सयित्वा नाविकांस्तान् भगवन्तममोचयत् । भक्त्या चाभ्यर्च्य परया चित्रो निजपुरं ययौ ॥ १४२ ॥

१ कूपतटे । २ पंचमादुत्तरः षष्ठ इत्यर्थः । ३ तीरे । ४ जामेयो भगिनीपुत्रः ।

॥ ४५ ॥

प्रतिमाधरः ॥ १४३ ॥
अथ वाणिजकग्रामं जगाम भगवानपि । बहिश्च धर्मध्यानस्थस्तत्रास्थात् प्रतिमाधरः ॥ १४४ ॥
तदा षष्ठतपास्तत्र नित्यमातापनापरः । आनन्दश्रावको जातावधिः प्रभुमवन्दत ॥ १४५ ॥
स प्राञ्जलिर्बभाषे च भगवन्नतिदुस्सहान् । परीषहानसहिष्ठा उपसर्गांश्च दारुणान् ॥ १४६ ॥
वज्रसारं शरीरं ते वज्रसारं च ते मनः । परीषहोपसर्गैरप्येभिर्यद्भज्यते न हि ॥ १४७ ॥
इदानीं केवलज्ञानमासन्नं वर्तते प्रभो । इत्युदित्वा प्रभुं भूयो नत्वा नन्दो ययौ गृहम् ॥ १४८ ॥
कायोत्सर्गं पारयित्वा श्रावस्त्यां पर्युपेत्य च । दीक्षातो दशमं वर्षाकालं स्वाम्यत्यवाहयत् ॥ १४९ ॥
पारयित्वा बहिस्तत्र ग्रामेऽगात्सानुयष्टिके । भद्रां च प्रतिमां तत्र भगवान् प्रत्यपद्यत ॥ १५० ॥
तस्यां ह्यनशितः पूर्वं पूर्वस्याभिमुखः प्रभुः । एकपुद्गलविन्यस्तदृक् तस्थौ सकलं दिनम् ॥ १५१ ॥
दक्षिणाभिमुखो रात्रिं पश्चिमाभिमुखो दिनम् । उत्तराभिमुखो रात्रिं षष्ठेन प्रतिमां व्यधात् ॥ १५२ ॥
अपारितो महाभद्राप्रतिमां शिश्रिये प्रभुः । तस्थौ चतुरहोरात्रीं तत्र पूर्वादिदिक्क्रमात् ॥ १५३ ॥
दशमेन महाभद्रां कृत्वैवं प्रतिमां प्रभुः । प्रपेदे सर्वतोभद्रां द्वाविंशतितमेन सः ॥ १५४ ॥
प्रत्येकमप्यहोरात्रं तस्थौ दिक्षु दशस्वपि । किं तु न्यधायदूर्ध्वाधोद्रव्याण्यूर्ध्वाधराशयोः[1] ॥ १५५ ॥
तिस्रोऽपि प्रतिमाः कृत्वा पारणाय जगद्गुरुः । आनन्दनाम्नो गृहिणः प्रविवेश निकेतनम् ॥ १५६ ॥
भाण्डानि[2] क्षालयन्त्यासीद्बहुला तत्र चेटिका[3] । त्यक्तुकामा[4]सोषितभक्तमपश्यत् प्रभुमागतम् ॥ १५७ ॥ भक्त्यान्नं सापि तद्ददौ ॥१५७॥
किं तुभ्यं कल्पत इति सा स्वामिनमभाषत । पाणिं प्रासारयत् स्वामी

१ ऊर्ध्वाधोदिशोः ऊर्ध्वाधोवस्तूनि न्यधात् । २ पात्राणि । ३ दासी । ४ त्यक्तुं कामो यस्याः सा ।

स्वामिपारणकप्रीतैः पंचदिव्यानि नाकिभिः[1] । चक्रिरे तत्र सदने मुमुदे च जनोऽखिलः ॥ १५८ ॥
तदैव बहुला राज्ञा दासीभावादमोच्यत । भवादपि हि मुच्यन्ते भव्याः स्वामिप्रसादतः ॥ १५९ ॥
पारयित्वा प्रभुस्तत्र विहरन् पृथिवीमिमाम् । दृढभूमिमनुप्राप बहुम्लेच्छकुलाकुलाम् ॥ १६० ॥
पेढालग्रामं निकषा[2] पेढालाराममन्तरा । कृताष्टमतपःकर्मा पालासं चैत्यमाविशत् ॥ १६१ ॥
जन्तूपरोधरहितमधिष्ठाय शिलातलम् । आजानुलंबितभुजो दे[3]रावनतविग्रहः ॥ १६२ ॥
स्थिरचेता निर्निमेषो रूक्षैकद्रव्यदत्तदृक् । तस्थौ तत्रैकरात्रिक्या महाप्रतिमया प्रभुः ॥ १६३ ॥
तदा शक्रः सुधर्मायां सभायां परिवारितः । सहस्रैश्चतुरशीत्या सामानिकदिवौकसाम् ॥ १६४ ॥
त्रयस्त्रिंशत्रायस्त्रिंशैः पर्षद्भिः[4] स्तिसृभिस्तथा । चतुर्भिर्लोकपालैश्च संख्यातीतैः प्रकीर्णकैः ॥ १६५ ॥
प्रत्येकं चतुरशीत्या सहस्रैरंगरक्षकैः । दृढाबद्धपरिकरैः ककुप्सु[5] चतसृष्वपि ॥ १६६ ॥
सेनाधिपतिभिः सेनापरिवीतैश्च[6] सप्तभिः । देवदेवीगणैराभियोग्यैः किल्बिषिकादिभिः ॥ १६७ ॥
तूर्यत्रयादिभिः कालं विनोदैरतिवाहयन् । गोप्ता दक्षिणलोकार्धे शक्रसिंहासने स्थितः ॥ १६८ ॥
अवधिज्ञानतो ज्ञात्वा भगवन्तं तथा स्थितम् । उत्थाय पादुके त्यक्त्वोत्तरासंगं विधाय च ॥ १६९ ॥
जान्वसव्यं[7] भुवि न्यस्य सव्यं च न्यंच्य[8] किंचन । शक्रस्तवेनावन्दिष्ट भूतलन्यस्तमस्तकः ॥ १७० ॥
समुत्थाय च सर्वांगोदञ्चद्रोमाञ्चकञ्चुकः[9] । शचीपतिरुवाचेदमुद्दिश्य सकलां सभाम् ॥ १७१ ॥

---

१ देवैः । २ समीपे । ३ किंचिन्नम्रशरीरः । ४ आभ्यन्तरमध्यबाह्यलक्षणाभिः । ५ दिक्षु । ६ सेनावेष्टितैः । ७ दक्षिणं जानु । ८ संकुच्य । ९ सर्वांगेपूद्भवद्रोमांचकंचुकः ।

॥ ४६ ॥

भो भोः सर्वेऽपि सौधर्मवासिनस्त्रिदशोत्तमाः । शृणुत श्रीमहावीरस्वामिनो महिमाद्भुतम् ॥ १७२ ॥
दधानः पञ्चसमितीर्गुप्तित्रयपवित्रितः । क्रोधमानमायालोभानभिभूतो निराश्रवः ॥ १७३ ॥
द्रव्ये क्षेत्रे च काले च भावे चाप्रतिबद्धधीः । रुद्धैकपुद्गलन्यस्तनयनो ध्यानमास्थितः ॥ १७४ ॥
अमरैरसुरैर्यक्षै रक्षोभिरुरगैर्नरैः । त्रैलोक्येनापि शक्येत ध्यानाच्चालयितुं न हि ॥ १७५ ॥
इत्याकर्ण्य वचः शाक्रं[1] शक्रसामानिकः सुरः । ललाटपट्टघटितभ्रुकुटीभंगभीषणः[2] ॥ १७६ ॥
कंपमानाधरः कोपाल्लोहितायतलोचनः[3] । अभव्यो गाढमिथ्यात्वसंगः संगमकोऽवदत्[4] ॥ १७७ ॥
मर्त्यः श्रमणमात्रोऽयं यदेवं देव वर्ण्यते । स्वच्छन्दं सदसद्वादे प्रभुत्वं तत्र कारणम् ॥ १७८ ॥
देवैरपि न चाल्योऽयं ध्यानादित्युद्भटं[5] प्रभो । कथं धार्येत[6] हृदये धृतं वा प्रोच्यते कथम् ॥ १७९ ॥
रुद्धान्तरिक्षः शिखरैर्मूले रुद्धरसातलः[7] । यैः किलोर्दस्यते[8] दोष्णा सुमेरुर्लोष्टुलीलया ॥ १८० ॥
सकुलाचलमेदिन्याः प्लावनव्यक्तवैभवः । येषामेषोऽपि गंडूषं करश्च मकराकरः[9] ॥ १८१ ॥
अप्येकभुजदंडेन प्रचंडां छत्रलीलया । उद्धरन्ति सहानेकभूधरां[10] ये वसुन्धराम् ॥ १८२ ॥
तेषामसमऋद्धीनां सुराणाममितौजसाम् । इच्छासंपन्नसिद्धीनां मर्त्यमात्रं कियानयम् ॥ १८३ ॥
एषोऽहं चालयिष्यामि तं ध्यानादित्युदीर्य सः । करेण भूमिमाहत्योदस्थादास्थानमंडपात्[11] ॥ १८४ ॥

---

१ इन्द्रसंबन्धि । २ ललाट एव पट्ट तत्र घटिता या भ्रुकुटी तस्या भंगेन भयंकरः । ३ रक्ते दीर्घे च लोचने यस्य सः । ४ संगमकनामा देवः । ५ उद्धतं वचः । ६ त्वया कर्त्रा । ७ मूले रुद्धं रसातलं पाताल येन सः । ८ उर्ध्वं क्षिप्यते । ९ समुद्रः । १० अनेकपर्वतैः सहवर्तमानाम् । ११ सभामंडपात् ।

अर्हन्तः परसाहाय्यात्तपः कुर्वन्त्यखंडितम् । मा ज्ञासीदिति दुर्बुद्धिः शक्रेण स ह्युपेक्षितः ॥ १८५ ॥
ततो वेगानलोत्पातपतापतघनाघनः । रौद्राकृतिदुरालोको भयापसरदप्सराः[3] ॥ १८६ ॥
विकटोरःस्थलाघातपुञ्जितग्रहमंडलः । स पापस्तत्र गतवान् यत्रासीत्परमेश्वरः ॥ १८७ ॥
॥ युग्मम् ॥
निष्कारणजगद्बन्धुं निराबाधं तथा स्थितम् । श्रीवीरं पश्यतस्तस्य मत्सरो ववृधेऽधिकम् ॥ १८८ ॥
गीर्वाणपांसनः पांसुवृष्टिं दुष्टोऽतनिष्ट सः । अकांडघटितारिष्टामुपरिष्टाज्जगत्प्रभोः ॥ १८९ ॥
विधुर्विधुन्तुदेनेव दुर्दिनेनेव भास्करः । पिदधे पांसुपूरेण सर्वांगीणं जगत्प्रभोः ॥ १९० ॥
समन्ततोऽपि पूर्णानि तथा श्रोतांसि पांसुभिः । यथा समभवत् स्वामी निःश्वासोच्छ्वासवर्जितः ॥१९१॥
तिलमात्रमपि ध्यानान्न चचाल जगद्गुरुः । कुलाचलश्चलति किं गजैः परिणतैरपि ॥ १९२ ॥
अपनीय ततः पांशु वज्रतुंडाः पिपीलिकाः । स समुत्पादयामास प्रभोः सर्वांगपीलिकाः ॥ १९३ ॥
प्राविशन्नेकतोऽङ्गेषु स्वैरं निर्ययुरन्यतः । विध्यन्त्यस्तीक्ष्णतुंडाग्रैः सूच्यो निवसनेष्विव ॥ १९४ ॥
निर्भाग्यस्येव वांछासु मोघीभूतासु तास्वपि । स दंशान् रचयामास नाकृत्यान्तो[11] दुरात्मनाम् ॥ १९५ ॥
तेषामेकप्रहारेण रक्तैर्गोक्षीरसोदरैः । भगवानभवन्नाथः सनिर्झर इवाद्रिराट्[12] ॥ १९६ ॥

१ वेगोत्थाग्निरूपः उत्पातनिबिडमेघरूपश्च । २ भयंकराकृत्यादुरालोकः । ३ भयान्नश्यन्त्योऽप्सरसो यस्मात्सः । ४ अधमदेवः । ५ विधुंतुदेन राहुणा । ६ इन्द्रियाणि । ७ तिर्यग्दंतप्रहारिभिः । ८ वज्रमुखाः । ९ वस्त्रेषु । १० व्यर्थीभूतासु । ११ अकार्यस्यान्तः । १२ पर्वतराजः ।

तैरप्यक्षोभ्यमाणेऽथ जगन्नाथे स दुर्मतिः । चक्रे प्रचंडतुण्डाग्रा दुर्निवारा घृतेलिकाः[1] ॥ १९७ ॥
शरीरे परमेशस्य निमग्नमुखमण्डलाः । ततस्ताः समलक्ष्यन्त रोमालीव सहोत्थिता ॥ १९८ ॥
ततोऽप्यविचलच्चित्ते योगविज्ञे[2] जगद्गुरौ । स महावृश्चिकांश्चक्रे ध्यानवृश्चननिश्चयी[3] ॥ १९९ ॥
प्रलयाग्निस्फुलिंगाभैस्तप्ततोमर[4]दारुणैः । तेऽभिन्दन् भगवद्देहं लांगूलांकुट[5]कंटकैः ॥ २०० ॥
तैरप्यनाकुले नाथे कूट[6]संकल्पसंकुलः । सोऽनल्पान् कल्पयामास नकुलान् दशनाकुलान् ॥ २०१ ॥
खिखीति [7]रसमानास्ते दंष्ट्राभिर्भगवत्तनुम् । खंडखंडैस्त्रोटयन्तो मांसखंडानसातयन् ॥ २०२ ॥
तैरप्य[8]कृतकृत्योऽसौ यमदोर्दंडदारुणान् । अत्युत्कटफटाटोपान् कोपात्प्रायुंक्त पन्नगान् ॥ २०३ ॥
[9]आशिरःपादमत्यर्थं महावीरं महोरगाः । अवेष्टन्त महावृक्षं कपिकंछु[10]लता इव ॥ २०४ ॥
प्रजह्नुस्ते तथा तत्र स्फुटन्ति स्म फटा[11] यथा । तथा दशन्ति स्म यथाभज्यन्त दशना अपि ॥ २०५ ॥
उद्भ्रान्तगरलेष्वेषु लंबमानेषु रज्जुवत् । स वज्रदशनानाशु मूषिकानुद[12]पीपदत् ॥ २०६ ॥
स्वाम्यंगं खनकाश्चखनुर्नखैर्दन्तैर्मुखैः करैः । मो[13]मूत्र्यमाणास्तत्रैव क्षते क्षारं निचिक्षिपुः ॥ २०७ ॥
तेष्वप्यकिञ्चिद्[14]भूतेषु भूती[15]भूत इव क्रुधा । उद्दंडदन्तमुशलं हस्तिरूपं ससर्ज सः ॥ २०८ ॥
सोऽधावत् पादपातेन मेदिनीं नमयन्निव । उद्धून्युद[16]स्तहस्तेन नभस्तस्त्रोटयन्निव ॥ २०९ ॥

१ घृतेलिका भाषाया "घीमेल" इति प्रसिद्धम् । २ योगज्ञे । ३ ध्यानच्छेदने निश्चयवान् । ४ तोमरं भल्लम् । ५ अंकुरं । ६ दुष्टविचारव्याप्तः । ७ शब्दं कुर्वन्तः । ८ अकृतार्थः । ९ शिर आरभ्य चरणपर्यन्तम् । १० कपिकच्छुरोषधिविशेषः । ११ सर्पफणाः । १२ भृशमुदपादयत् । १३ वारंवारं मूत्रं कुर्वन्तः । १४ व्यर्थीभूतेषु । १५ अभूतो भूतो भूतयोनिविशेषो भूतो जात इति च्विः । १६ उत्क्षिप्तशुण्डादण्डेनाकाशान्नक्षत्राणि त्रोटयन्निव ।

करोग्रेण गृहीत्वा च दुर्वारेण स वारणः[1] । दूरमुल्लालयामास भगवन्तं नभस्तले ॥ २१० ॥
विशीर्य कणशोऽगच्छत्वसाविति दुराशयः । दन्तावुदस्य स व्योम्नः पतन्तं स्म प्रतीच्छति ॥ २११ ॥
पतितं दन्तघातेन विध्यति स्म मुहुर्मुहुः । वेक्षसो[2] वज्रकठिनात्समुत्तस्थुः स्फुलिंगकाः ॥ २१२ ॥
न शशाक वराकोऽसौ कर्तुं किंचिदपि द्विपः । यावत्तावत्सुरश्चक्रे करिणीं वैरिणीमिव ॥ २१३ ॥
अरुंतुदन्ताभ्यां भगवन्तं बिभेद सा । स्वैरं शरीरनीरेण विषेणेव सिषेच च ॥ २१४ ॥
करेणो रेणुसाद्भूते तस्याः सारे सुराधमः । पिशाचरूपमकरोन्मकरोत्कटदंष्ट्रकम्[3] ॥ २१५ ॥
ज्वालाजालाकुलं व्यात्तव्यायतं[4] वक्रकोटरम् । अभवद्भीषणं तस्य वह्निकुंभमिव ज्वलत् ॥ २१६ ॥
यमौकस्तोरणस्तंभाविव प्रोत्तंभितौ भुजौ । अभूच्च तस्य जंघोरु तुंगं तालद्रुमोपमम् ॥ २१७ ॥
स साट्टहासः फेत्कुर्वन् स्फूर्जत्किलकिलारवः । कृत्तिवासाः[5] कर्त्रिकाभृद्भगवन्तमुपाद्रवत् ॥ २१८ ॥
तस्मिन्नपि हि विध्याते क्षीणतैलप्रदीपवत् । व्याघ्ररूपं क्रुधा ध्मातः शीघ्रं चक्रे स निर्घृणः[6] ॥ २१९ ॥
अथ पुच्छच्छटाच्छोटैः पाटयन्निव मेदिनीम् । बूत्कारप्रतिशब्दैश्च[7] रोदसी[8] रोदयन्निव ॥ २२० ॥
दंष्ट्राभिर्वज्रसाराभिर्नखाग्रैः शूलसोदरैः । अव्यग्रं व्यापिपर्ति[9] स्म व्याघ्रो भुवनभर्तरि ॥ २२१ ॥
तत्र विच्छायतां प्राप्ते दवदग्ध इव द्रुमे । सिद्धार्थराजरूपं स विचक्रे विबुधाधमः ॥ २२२ ॥
किमेतद्भवता तात प्रक्रान्तमतिदुष्करम् । प्रव्रज्यां मुञ्च मास्माकं प्रार्थनामवजीगणः ॥ २२३ ॥

१ गजः । २ प्रभुवक्षःस्थलात् । ३ मकरस्येवोत्कटा दंष्ट्रा यस्मिंस्तत् । ४ व्यात्तं विवृत च तद्व्यायतं दीर्घं चेति तथा । ५ चर्मवस्त्रः । ६ निर्दयः । ७ बूत्कारो व्याघ्रशब्दः । ८ द्यावापृथिव्यौ । ९ व्यापारं करोति स्म ।

वार्धके मामशरणं त्यक्त्वान्नन्दिवर्धनः । विकृता त्रिशला चैवं विललाप मुहुर्मुहुः ॥ २२४ ॥

॥ युग्मम् ॥

ततस्तयोर्विलापैरप्यक्षिप्तमनसि प्रभौ । आवासितं दुराचारः स्कन्धावारमकल्पयत् ॥ २२५ ॥

तत्रानासाद्य दृषदः सूदः सादर ओदने[1] । चुल्लीपदे प्रभोः पादौ कृत्वा स्थालीं न्यवेदयत् ॥ २२६ ॥

तत्कालं ज्वालितस्तेन जज्वाल ज्वलनोऽधिकम् । पादमूले जगद्भर्तुर्गिरेरिव दवानलः ॥ २२७ ॥

तप्तस्यापि प्रभोः स्वर्णस्येव न श्रीरहीयत । ततः सुराधमश्चक्रे पक्कणं[2] दारुणं क्वणम्[3] ॥ २२८ ॥

पक्कणोऽपि प्रभोः कंठे कर्णयोर्भुजदंडयोः । जंघयोश्च क्षुद्रपक्षिपंजराणि व्यलंबयत् ॥ २२९ ॥

खगैश्चंचुनखाघातैस्तथा दद्रे प्रभोस्तनुः[4] । यथा छिद्रशताकीर्णा तत्पञ्जरमिवाभवत् ॥ २३० ॥

तत्राप्यसारतां प्राप्ते पक्कणे पक्कपत्रवत् । उत्पादितमहोत्पातं खरवातमजीजनत्[5] ॥ २३१ ॥

अन्तरिक्षे महावृक्षांस्तृणोत्क्षेपं समुत्क्षिपन् । विक्षिपन् पांशुविक्षेपं दिक्षु च ग्रावकर्करान्[6] ॥ २३२ ॥

सर्वतो रोदसीगर्त्तं भस्त्रापूरं च पूरयन् । उत्पाट्योत्पाट्य वातोसौ भगवन्तमपातयत् ॥ २३३ ॥

॥ युग्मम् ॥

तेनापि खरवातेनापूर्णकामो विनिर्ममे । द्युसत्कुलकलंकोऽसौ[7] द्राक् कलंकलिकानिलम्[8] ॥ २३४ ॥

भूभृतोऽपि[9] भ्रमयितुमलंकर्मीणविक्रमः । भ्रमयामास चक्रस्थमृत्पिंडमिव स प्रभुम् ॥ २३५ ॥

---

१ ओदनं पक्तु सादर आदरसहितः । २ चंडालम् । ३ भयंकरशब्दम् । ४ पक्षिभिः । ५ तीक्ष्णवायुं झंझावातमिति यावत् । ६ पाषाणकर्करान् । ७ देवकुले कलंकः । ८ आवर्तवज्झंझावातम् । ९ पर्वतानपि ।

भ्रम्यमाणोऽर्णवावर्तेनेव तेन नभस्वता । तदेकतानो न ध्यानं मनागपि जहौ प्रभुः ॥ २३६ ॥
वज्रसारमनस्कोऽयं बहुधापि कदर्थितः । न क्षुभ्यति कथमहं भग्नगौर्यामि तां सभाम् ॥ २३७ ॥
तदस्य प्राणनाशेन ध्यानं नश्यति नान्यथा । चिन्तयित्वेति चक्रे स कालचक्रं सुराधमः ॥ २३८ ॥
अर्हाय तदयोभारसहस्रघटितं ततः । उद्दधार सुरः शैलं कैलासमिव रावणः ॥ २३९ ॥
पृथिवीं संपुटीकर्तुं कृतं मन्ये पुटान्तरम् । उत्पाट्य कालचक्रं स प्रचिक्षेपोपरि प्रभोः ॥ २४० ॥
ज्वालाजालैरुज्ज्वलद्भिर्दिशः सर्वाः करालयत् । तत्पपात जगद्भर्तर्यौर्वानल इवार्णवे ॥ २४१ ॥
कुलक्षितिधरक्षोदक्षमस्यास्य प्रहारतः । ममज्जाजानु भगवानन्तर्वसुमतीतलम् ॥ २४२ ॥
एवं भूतेऽपि भगवानशोचदिदमस्य यत् । तितारयिषवो विश्वं वयं संसारकारणम् ॥ २४३ ॥
कालचक्रहतोऽप्येष प्रपेदे पंचतां न यत् । अगोचरस्तदस्त्राणामुपायः क इहापरः ॥ २४४ ॥
अनुकूलैरुपसर्गैः क्षुभ्येद्यदि कथंचन । इति बुद्ध्या सुरश्चक्रे तानाशु त्रिजगद्गुरोः ॥ २४५ ॥
सद्यः प्रकाशमानाशं क्रोशंत्खगकुलाकुलम् । प्रातःकालमकालेऽपि दर्शयामास दुष्टधीः ॥ २४६ ॥
तां च दैवीमसौ मायां मन्यमानो महामनाः । न मुमोच विभुर्ध्यानमभिग्रहकृताग्रहः ॥ २४७ ॥
ताडंकहारकेयूरकिरीटद्योतितांबरः । तत्संहृत्य विमानस्थः स पुरोऽस्थादुवाच च ॥ २४८ ॥

१ समुद्रस्यावर्त्तनेव । २ वायुना । ३ भग्ना भ्रष्टा गौर्वाग्यस्य सः । ४ तत्क्षणम् । ५ कराल भयंकरमाचरत् कर्तृपदम् । ६ कुलपर्वताना चूर्णकरणे क्षमस्य । ७ जानुपर्यन्तम । ८ अन्यांस्तारयितुमिच्छव. । ९ प्रकाशमाना दिशो येन तत् । १० शब्द कुर्वता पक्षिणां कुलेनाकुलम् ।

महर्षे तव तुष्टोऽस्मि सत्त्वेन तपसौजसा । प्राणा[1]नपेक्षभावेनारब्धनिर्वहणेन च ॥ २४९ ॥
पर्याप्तं तपसानेन शरीरक्लेशकारिणा । ब्रूहि याचस्व मा कार्षीः शंकां यच्छामि किं तव ॥ २५० ॥
इच्छामात्रेण पूर्यन्ते यत्र नित्यं मनोरथाः । किमनेनैव देहेन त्वां स्वर्गं प्रापयामि तम् ॥ २५१ ॥
[2]अनादिभवसंरूढकर्मनिर्मोक्षलक्षणम् । एकान्तपरमानन्दं मोक्षं वा त्वां नयामि किम् ॥ २५२ ॥
अशेषमरुलाधीशमौलिलालितशासनम् । अथवात्रैव यच्छामि साम्राज्यं प्राज्यमृद्धिभिः ॥ २५३ ॥
इत्थं प्रलोभनावाक्यैरक्षोभ्यमनसि प्रभौ । अप्राप्तप्रतिवाक् पापः पुनरेवमचिन्तयत् ॥ २५४ ॥
मोघीकृतमनेनैतन्मम शक्तिविजृम्भितम् । तदिदानीममोघं स्यादद्यैकं कामशासनम् ॥ २५५ ॥
यतः कामास्त्रभूताभिः कामिनीभिः कटाक्षिताः । दृष्टा महापुमांसोऽपि लुंपन्तः पुरुषव्रतम् ॥ २५६ ॥
इति निश्चित्य चित्तेन निर्दिदेश सुरांगनाः । तद्विभ्रमसहायान् षट् प्रायुंक्त स ऋतूनपि ॥ २५७ ॥
[3]कृतप्रस्तावना मत्तकोकिलाकलकूजितैः । कंदर्पनाटकनटी वसन्तश्रीरशोभत ॥ २५८ ॥
मुखवासं [4]सृजयन्ती विकसन्नीपरेणुभिः । सैरन्ध्रीव[5] दिग्वधूनां ग्रीष्मलक्ष्मीरजृम्भत ॥ २५९ ॥
राज्याभिषेककामस्य मंगल्यतिलकानिव । सर्वांगं केत[6]कव्याजात् कुर्वती प्रावृडाबभौ ॥ २६० ॥
सहस्रनयनीभूय नवनीलोत्पलच्छलात् । स्वसंपदमिवोद्दामां पश्यन्ती शुशुभे शरद् ॥ २६१ ॥
जय[7]प्रशस्तिं कामस्य श्वेताक्षरसहोदरैः । हेमन्तश्रीर्लिलेखेव प्रत्यग्रैः कुन्दकुड्मलैः ॥ २६२ ॥

---

१ प्राणाना निरपेक्षत्वेन । २ अनादिससारैः संरूढानां कर्मणां नितरां मोक्ष एव लक्षणं यस्य तम् । ३ कृता प्रस्तावना यया सा ४ रचयन्ती । ५ दासीव । ६ केतकीपुष्पमिषात् । ७ जयप्रशंसापत्रम् ।

गणिकेवोपजीवन्ती हेमन्तसुरभी[1]समम् । कुन्दैश्च सिन्दुवारैश्च शिशिरश्रीरचीयत ॥ २६३ ॥
एवमुज्जृम्भमाणेषु सममेवर्तुषु क्षणात् । मीनध्वजपताकिन्यः प्रादुरासन् सुरांगनाः ॥ २६४ ॥
संगीतमविगीतांग्यः[2] पुरो भगवतस्ततः । ताः प्रचक्रमिरे जैत्रं[3] मंत्रास्त्रमिव मान्मथम्[4] ॥ २६५ ॥
तत्राविसूत्रितलयं[5] गान्धारग्रामबन्धुरम् । काभिश्चिदुदगीयन्त जातयः[6] शुभ्रचेतसः ॥ २६६ ॥
क्रमव्युत्क्रमगैस्तानैर्व्यक्तैर्व्यंजनधातुभिः । प्रवीणाऽवादयद्वीणां काचित् सकलनिष्कलाम्[7] ॥ २६७ ॥
स्फुटझंकारधोंकारप्रकारैर्मेघनिस्वनान् । काश्चिच्च वादयामासुर्मृदंगांस्त्रिविधानपि ॥ २६८ ॥
नभोभूगतचारीकं[8] विचित्रकरणोत्कटम्[9] । दृष्टिभावैर्नवनवैः काश्चिदप्यनरीनृतुः ॥ २६९ ॥
दृढांगहारा[10]भिनयैः सद्यस्त्रुटितकंचुका । बध्नन्ती श्लथधम्मिल्लं[11] दोर्मूलं काप्यदीदृशत् ॥ २७० ॥
दंडपादाभिनयनच्छलात् कापि मुहुर्मुहुः । चारुगोरोचनागौरमूरुमूलमदर्शयत् ॥ २७१ ॥
श्लथचंडातक[12]ग्रंथिदृढीकरणलीलया । कापि प्राकाशयद्वापी[13]सनाभि नाभिमंडलम् ॥ २७२ ॥
व्यपदेश्येभदन्ताख्यहस्ताभिनयं मुहुः । गाढमंगपरिष्वंगसंज्ञां काचिच्च निर्ममे ॥ २७३ ॥
संचारयन्त्युत्तरीयं नीवीनिबिडन[14]च्छलात् । नितंबबिंबफलकं काचिदाविरभावयत् ॥ २७४ ॥

---

१ सुरभिर्वसन्तर्तुः । २ अविगीतं सुन्दरमंगं यासा ताः । ३ जयनशीलम् । ४ कामदेवसंबन्धि । ५ लयास्तानविशेषाः । ६ षड्जादिस्वराणाम् । ७ पूर्णयोग्याम् । ८ नभसि भुवि च गता चारी गतिविशेषो यस्मिन् कर्मणि यथास्यात्तथा । ९ विचित्रं यत्करण संगीत तेनोद्धरसुदारं यथा स्यात्तथा । १० दृढो योंगहारोऽङ्गुल्यादीनामभिनयपूर्वकं नर्तनं तस्याभिनयैः । ११ श्लथो यो धम्मिल्लः केशपाशस्तम् । १२ चंडातकः उत्तरीयम् । १३ वापीसदृशम् । १४ नीव्या दृढीकरणमिषात् ।

अंगभंगापदेशेन वक्षः पीनोन्नतस्तनम् । सुचिरं रोचयामास काचिद्रुचिरलोचना ॥ २७५ ॥
यदि त्वं वीतरागोऽसि रागं तन्नस्तनोषि किम् । शरीरनिरपेक्षश्चेद्दत्से वक्षोऽपि किं न नः ॥ २७६ ॥
दयालुर्यदि वासि त्वं तदानीं विषमायुधात् । अकांडाकृष्टकोदंडादस्मान्न त्रायसे कथम् ॥ २७७ ॥
उपेक्षसे कौतुकेन यदि नः प्रेमलालसाः । किंचिन्मात्रं हि तद्युक्तं मरणान्तं न युज्यते ॥ २७८ ॥
स्वामिन् कठिनतां मुंच पूरयास्मन्मनोरथान् । प्रार्थनाविमुखो मा भूः काश्चिदित्यूचिरे चिरम् ॥२७९॥
एवं गीतातोद्यनृत्तैर्विकारैरांगिकैरपि । चाटुभिश्च सुरस्त्रीणां न चुक्षोभ जगद्गुरुः ॥ २८० ॥
एवं विंशत्युपसर्गी तत्र रात्रौ सुराधमः । चक्रे संगमकः कायोत्सर्गस्थस्य जगद्गुरोः ॥ २८१ ॥
प्रातः संगमकश्चैवमचिन्तयदहो अयम् । नेषदप्यचलद्ध्यानान्मर्यादाया इवार्णवः ॥ २८२ ॥
तत्किं यामि दिवं भ्रष्टप्रतिज्ञो यामि वा कथम् । क्षोभयिष्याम्युपसर्गैः स्थित्वाहं चिरमप्यमुम् ॥२८३॥
पथि सूर्यकरस्पृष्टे युगमात्रप्रदत्तदृक् । भगवान् वालुकाभिख्यं ग्रामं प्रत्यचलत्ततः ॥ २८४ ॥
सुराधमः संगमकः पंचचौरशतीं पथि । विचक्रे वालुकां चोच्चैर्वालुकार्णवसन्निभाम् ॥ २८५ ॥
मातुल मातुलेत्युच्चैर्जल्पन्तो दस्यवः प्रभुम् । तथा सस्वजिरे गाढं यथा गिरिरपि स्फुटेत् ॥ २८६ ॥
जगाम वालुकाग्रामं प्रशमामृतसागरः । जानुदघ्नं वालुकायां मज्जत्पादो जगद्गुरुः ॥ २८७ ॥
निसर्गक्रूरधीरित्थमुपसर्गान् सुराधमः । पुरे ग्रामे वनेऽन्यत्राप्यनुगच्छन् प्रभोर्व्यधात् ॥ २८८ ॥
उपसर्गकृतो जग्मुर्मासाः संगमकस्य षट् । अथागाद्गोकुले स्वामी तदासीत्तत्र चोत्सवः ॥ २८९ ॥

१ कामात् । २ चाटुवाक्यैः । ३ विंशतेरुपसर्गाणां समाहारस्ताम् । ४ जानुप्रमाणं मज्जन्तौ पादौ यस्य सः ।

षडप्युपोषितो मासान् भगवानतिलंघ्य तान् । कर्तुकामः पारणकं भिक्षार्थं गोकुलेऽविशत् ॥ २९० ॥
यत्र यत्र गृहे स्वामी प्रययौ तत्र तत्र च । अनेषणां प्रविदधे पापधीः स सुराधमः ॥ २९१ ॥
दत्तोपयोगो ज्ञात्वा तमनिवृत्तं सुराधमम् । स्वामी निवृत्य भिक्षायास्तस्थौ प्रतिमया बहिः ॥ २९२ ॥
किं भग्नपरिणामोऽयमिति सोऽप्यवधेः सुरः । यावदैक्षिष्ट तावच्चापश्यदक्षुभितं प्रभुम् ॥ २९३ ॥
स सुरोऽचिन्तयच्चैवं षण्मासीं सन्ततैः कृतैः । नोपसर्गैः कंपितोऽसौ सह्योऽर्णवजलैरिव ॥ २९४ ॥
दीर्घेणाप्येष कालेन ध्यानान्न हि चलिष्यति । वृथा मे प्रक्रमोऽत्राभूज्जलेवाद्रिभेदने ॥ २९५ ॥
स्वर्विलाससुखं हित्वा शापभ्रष्ट इवावनिम् । कियच्चिरं ह हाभ्राम्यं निजदुर्बुद्धिवञ्चितः ॥ २९६ ॥
एवं विचिन्त्य स सुरः प्रणम्य च जगद्गुरुम् । कृताञ्जलिर्म्लानमुखो ह्रीणश्चैवमभाषत ॥ २९७ ॥
यथा सभायां शक्रेण कीर्तितोऽसि तथा ह्यसि । तद्वचोऽश्रद्दधानेन मयास्येवमुपद्रुतः ॥ २९८ ॥
सत्यप्रतिज्ञस्त्वं भ्रष्टप्रतिज्ञोऽहमसौ पुनः । न व्यधायि मया साधु तत्क्षमस्व क्षमानिधे ॥ २९९ ॥
द्यां यास्याम्युपसन्नोऽहमुपसर्गपराङ्मुखः । व्रज त्वमपि निःशंको ग्रामाकरपुरादिषु ॥ ३०० ॥
ग्रामेषु विश भिक्षायै भुंक्ष्वाहारमदूषितम् । भिक्षादोषा अपि पुरा विहितास्ते मयैव हि ॥ ३०१ ॥
स्वाम्यवोचत नश्चिन्तां मुञ्च संगमकामर । कस्याप्यधीना न वयं विहरामो निजेच्छया ॥ ३०२ ॥
इत्युक्तवन्तं श्रीवीरं प्रणम्य स सुराधमः । सानुतापः प्रचचाल पुरुहूतपुरीं प्रति ॥ ३०३ ॥
इतश्च कालं तावन्तं सुराः सौधर्मवासिनः । निरानन्दा निरुत्साहा उद्विग्नाश्चावतस्थिरे ॥ ३०४ ॥

१ सह्याद्रिः । २ उपक्रमः । ३ स्वर्गक्रीडासुखम् । ४ शान्तः । ५ इंद्रनगरीम् ।

शक्रोऽपि मुक्तनेपथ्यांगरागोऽत्यन्तदुःखितः । संगीतकादिविमुखो मनस्येवमचिन्तयत् ॥ ३०५ ॥
दृश्यतामुपसर्गाणां निमित्तमभवं ह्यहम् । मया स्वामिप्रशंसायां कृतायां सोऽकुपत्सुरः ॥ ३०६ ॥
अत्रान्तरे संगमकः पापपंकमलीमसः । प्रणष्टकान्तिप्राग्भारोऽम्भःस्पृष्ट इव दर्पणः ॥ ३०७ ॥
भ्रष्टप्रतिज्ञो मन्दाक्षमन्दीभूताक्षिपंकजः । देवराजाधिष्ठितां तां सुधर्मामाययौ सभाम् ॥ ३०८ ॥
॥ युग्मम् ॥

शक्रः संगमकं दृष्ट्वा सद्यो भूत्वा पराङ्मुखः । इत्यूचे भोः सुराः सर्वेऽप्याकर्णयत मद्वचः ॥ ३०९ ॥
अयं हि कर्मचंडालः पापः संगमकामरः । दृश्यमानोऽपि पापाय तद्द्रष्टुं नैष युज्यते ॥ ३१० ॥
बह्वनेनापराद्धं हि यत्स्वामी नः कदर्थितः । नास्मत्त्योऽपि किं भीतो भवाद्भीतो न यद्ययम् ॥ ३११ ॥
अर्हन्तो नान्यसाहाय्यात्तप्यंते तप इत्यहम् । तथोपसर्गकालेऽपि नामुं पापमशिक्षयम् ॥ ३१२ ॥
अतः परमिह तिष्ठन्नस्माकमपि पाप्मने । निर्वासनीयस्तदसौ कष्टपादस्मात्सुराधमः ॥ ३१३ ॥
इत्युदित्वा वज्रपाणिर्वज्रेणेव शिलोच्चयम् । जघान वामपादेन सुराधममसर्षणः ॥ ३१४ ॥
पर्यस्यमानो विविधायुधैर्माघवनैर्भटैः । आक्रुश्यमानस्त्रिदशस्त्रीभिर्मोटितपाणिभिः ॥ ३१५ ॥
सामानिकैर्हस्यमानो यानकाख्यविमानगः । स शिष्टैकार्णवायुष्को मेरुचूलां सुरो ययौ ॥ ३१६ ॥
॥ युग्मम् ॥

१ प्राग्भारः समूहः । २ मन्दान्यक्षाणीन्द्रियाणि यस्य स चासौ मन्दीभूताक्षिपंकजश्च । ३ पापाय । ४ गिरिम् । ५ इन्द्रसेवकैः । ६ मोटिता वक्रीकृता हस्ता याभिस्ताः ।

महिष्यः संगमकस्य शक्रमेवं व्यजिज्ञपन् । स्वनाथमनुगच्छामस्त्वदादेशो भवेद्यदि ॥ ३१७ ॥
अनुगन्तुं संगमकं दीनास्या अन्वमंस्त ताः । अवारयत्परीवारमशेषमपि वासवः ॥ ३१८ ॥
द्वैतीयिकेऽथ दिवसे तत्र गोचरचर्यया । प्राविशद्गोकुलवरे पारणेच्छुर्जगद्गुरुः ॥ ३१९ ॥
तत्रैका भक्तितो वत्सपालकस्थविरा प्रभुम् । कल्पेन परमान्नेनोषितेन प्रत्यलाभयत् ॥ ३२० ॥
चिराज्जातेन भगवत्पारणेन प्रमोदतः । चक्रिरे पञ्च दिव्यानि तत्र सन्निहिताः सुराः ॥ ३२१ ॥
ततश्च विहरन् स्वामी पुरीमालभिकां ययौ । तस्थौ प्रतिमया तत्रालेख्यस्थ[1] इव सुस्थिरः ॥ ३२२ ॥
तत्र विद्युत्कुमारेन्द्रो नाम्ना हरिरिति प्रभुम् । एत्य प्रदक्षिणीकृत्य प्रणम्यैवमवोचत ॥ ३२३ ॥
उपसर्गास्त्वया नाथ ते सोढा यैः श्रुतैरपि । अस्मादृशा विदीर्यन्ते वज्रादप्यतिरिच्यसे ॥ ३२४ ॥
स्तोकेनाप्युपसर्गेण घातिकर्मचतुष्टयम् । हनिष्यस्यचिरादेव केवलं चार्जयिष्यसि ॥ ३२५ ॥
इत्युदित्वा भगवन्तं नमस्कृत्य च भक्तितः । हरिर्विद्युत्कुमारेन्द्रो ययौ निजनिकेतनम् ॥ ३२६ ॥
भगवानपि निर्गत्य नगरीं श्वेतवीं ययौ । विद्युदिन्द्रो हरिसहस्तत्रैत्यावन्दत प्रभुम् ॥ ३२७ ॥
आख्याय सोऽपि हरिवज्जगाम निजमाश्रयम् । नाथोऽपि गत्वा श्रावस्त्यां तस्थौ प्रतिमया स्थिरः ३२८
तस्यां पुर्यां दिने तस्मिन्महाविच्छर्दपूर्वकम्[2] । प्रारब्धोऽभूज्जनैः स्कन्दरथयात्रामहोत्सवः ॥ ३२९ ॥
प्रतिमास्थमतिक्रम्य भगवन्तं पुरीजनाः । स्कन्दं प्रति ययुश्चैत्यपूजापटलिकाभृतः[3] ॥ ३३० ॥
स्नपयित्वा पूजयित्वा स्कन्दस्य प्रतिमां जनाः । रथमध्यारोपयितुमसज्जन्त यथाविधि ॥ ३३१ ॥

१ चित्रस्थः । २ महाडंबरपूर्वकम् । ३ चैत्यपूजाकृते पटलिका पूजासामग्रीं बिभ्रतीति तथा ।

तदा चाचिन्तयच्छक्रः कथं विहरति प्रभुः । ददर्श चावधेर्वीरं तथास्थं तांश्च नागरान् ॥ ३३२ ॥
कथं नाथमतिक्रम्य निर्विवेको जनो ह्ययम् । स्कन्दपूजां करोतीति सेर्ष्यस्तत्राययौ हरिः ॥ ३३३ ॥
शक्रेणाधिष्ठिता स्कन्दप्रतिमा प्रतिमास्थितम् । भगवन्तं प्रत्यचालीद्यंत्रपांचालिकेव सा ॥ ३३४ ॥
अहो स्कन्दकुमारोऽयं रथमारोक्ष्यति स्वयम् । इत्यूचुर्नागरा यावत्तावत् सा स्वामिनं ययौ ॥ ३३५ ॥
सा त्रिः प्रदक्षिणीकृत्य भगवन्तं ननाम च । उपासितुं च प्रारेभे निषण्णा पृथिवीतले ॥ ३३६ ॥
अयमस्यापि देवस्य पूज्यः कोऽपीति सर्वथा । चक्रे न युक्तमस्माभिर्यदस्यातिक्रमः कृतः ॥ ३३७ ॥
इति ब्रुवाणास्ते पौरा विस्मयानन्दधारिणः । महिमानं प्रभोश्चक्रुः कौशांबीं च ययौ प्रभुः ॥ ३३८ ॥
तत्रार्केन्दू सविमानौ जिनेन्द्रं प्रतिमास्थितम् । भक्त्याभ्येत्य ववन्दाते सुयात्राप्रश्नपूर्वकम् ॥ ३३९ ॥
क्रमाच्च विहरन् स्वामी ययौ वाराणसीं पुरीम् । अभ्येत्य तत्र शक्रेण ववन्दे मुदितात्मना ॥ ३४० ॥
ततो राजगृहे गत्वा स्थितं प्रतिमया प्रभुम् । ईशानेन्द्रोऽनमद्भक्त्या सुयात्राप्रश्नपूर्वकम् ॥ ३४१ ॥
गतोऽथ मिथिलापुर्यां स्वामी जनकभूभुजा । धरणेन्द्रेण चापूजि प्रियप्रश्नविधायिना ॥ ३४२ ॥
ततो विहरमाणोऽगाद्विशालीं नगरीं प्रभुः । तत्र चैकादशो वर्षाकालो व्रतदिनादभूत् ॥ ३४३ ॥
तस्यां च समरोद्याने बलदेवनिकेतने । चतुर्मासक्षपणभृत्तस्थौ प्रतिमया प्रभुः ॥ ३४४ ॥
भूतानन्दो नागराजस्तत्रैत्यावन्दत प्रभुम् । आसन्नं केवलज्ञानं समाख्याय जगाम च ॥ ३४५ ॥
परमश्रावकस्तत्र जिनदत्ताभिधोऽवसत् । दयावान् विश्रुतो जीर्णश्रेष्ठीति विभवक्षयात् ॥ ३४६ ॥

---

१ सेवितुम् ।

तत्रोद्याने बलदेवायतने स गतस्तदा । जिनदत्तो जिनपतिं ददर्श प्रतिमास्थितम् ॥ ३४७ ॥
छद्मस्थ एष सर्वज्ञोऽस्तीति निश्चित्य स प्रभुम् । भक्त्या ववन्दे परया चित्ते चैवमचिन्तयत् ॥ ३४८ ॥
उपोषितोऽसौ भगवानद्यास्ति प्रतिमाधरः । श्वः कर्ता पारणं चेन्मन्मन्दिरे सुंदरं तदा ॥ ३४९ ॥
नित्यमित्याशया नाथं चतुर्मासीमसेवत । तदन्त्याहे निमंत्र्येशं स ययौ निजवेश्मनि ॥ ३५० ॥
पूर्वसंसाधितान्यात्मनिमित्तं स महामनाः । प्रासुकान्येषणीयानि वरभोज्यान्यचिन्तयत् ॥ ३५१ ॥
जिनदत्तो जिनमार्गदत्तदृक् प्रांगणे स्थितः । दध्यावेतानि भोज्यानि दास्यामि स्वामिने खलु ॥ ३५२ ॥
धन्योऽस्मि खलु यस्यौकस्यर्हन् स्वयमिहैष्यति । करिष्यति पारणं च संसारार्णवतारणम् ॥ ३५३ ॥
आगच्छतश्च नाथस्य गमिष्याम्येष संमुखम् । त्रिश्च प्रदक्षिणीकृत्य वन्दिष्ये तत्पदांबुजे ॥ ३५४ ॥
अपुनर्जन्मने[1] जन्म मम चेदं भविष्यति । मोक्षाय दर्शनमपि किं पुनः पारणं प्रभोः ॥ ३५५ ॥
एवं च चिन्तयन् यावत्स तस्थौ शुचिमानसः[2] । तावज्जगामाभिनवश्रेष्ठिनो धामनि प्रभुः ॥ ३५६ ॥
स श्रेष्ठी श्रीमदोद्ग्रीव[3]श्चेटीं[4] मिथ्यादृगादिशत् । दत्वा भिक्षामसौ भिक्षुर्मक्षु भद्रे विसृज्यताम् ॥ ३५७ ॥
दारुहस्तक[5]हस्ता सा कुल्माषान् समुपानयत् । चिक्षेप च जगद्भर्तुः पाणिपात्रे प्रसारिते ॥ ३५८ ॥
ताडितो दुन्दुभिर्देवैश्चेलोत्क्षेपश्च निर्ममे । वसुधारा पुष्पगन्धांभसां वृष्टिश्च तत्क्षणात् ॥ ३५९ ॥
लोकैश्च पृष्टोऽभिनवश्रेष्ठी मायी[6]त्येवमब्रवीत् । स्वयं मया पायसेन पारणं कारितः प्रभुः ॥ ३६० ॥

१ मोक्षाय । २ पवित्रचित्तः । ३ लक्ष्म्या मदेनोर्ध्वग्रीवः । ४ दासीम् । ५ दारुहस्तकः काष्ठनिर्मितहस्तकः हस्तको भाषाया " कडछी " इति ख्यातम् । ६ मायावान् ।

अहो दानं सुदानं चेत्याकर्ण्य दिविषद्ध्वनिम्[1] । लोको राजा चाभिनवश्रेष्ठिनं तुष्टुवुर्मुहुः ॥ २६१ ॥
स्वाम्यागमनचिन्तावाञ्जीर्णश्रेष्ठी तथा स्थितः । दिविषद्दुन्दुभिध्वानमाकर्ण्यैवं व्यचिन्तयत् ॥ २६२ ॥
धिगहो मन्दभाग्योऽस्मि मुधा मम मनोरथः । यदतिक्रम्य मद्वेश्मान्यत्र प्रभुरपारयत् ॥ २६३ ॥
पारयित्वा प्रभुरपि विहरन्नन्यतो ययौ । तत्रोद्याने पार्श्वशिष्यः केवल्यथ समाययौ ॥ २६४ ॥
राजा लोकश्च तं गत्वा पप्रच्छ भगवन्निह । नगर्यां को महापुण्यसंभारोपार्जको जनः ॥ २६५ ॥
जीर्णश्रेष्ठीति सोऽप्याख्यल्लोकोऽप्यूचे कथं ह्यसौ । न स्वामी पारितोऽनेनाभिनवेन हि पारितः ॥२६६॥
वसुधाराप्यभिनवश्रेष्ठिनो मन्दिरेऽपतत् । स कथं न महापुण्यसंभारोपार्जकः प्रभो ॥ २६७ ॥
केवल्याख्यद्भावतोऽर्हञ्जिनदत्तेन पारितः । तथोपार्ज्यच्युते कल्पे जन्मानेन भवादितः ॥ २६८ ॥
तादृग्भावस्तदायं चेन्नाश्रोष्यद्दुन्दुभिध्वनिम् । तदाध्यानान्तरगतः प्राप्स्यत्केवलमुज्ज्वलम् ॥ २६९ ॥
शुद्धभावविहीनेनाभिनवश्रेष्ठिना पुनः । प्राप्तमर्हत्पारणस्य वसुधारैहिकं फलम् ॥ २७० ॥
भक्त्यभक्तिविहीनं[2] तदर्हत्पारणजं फलम् । आकर्ण्य विस्मितो लोकः स्थानं निजनिजं ययौ ॥ २७१ ॥
इतश्च नगरग्रामाकरद्रोणमुखादिषु । विहरन् भगवान् वीरः सुंसुमारपुरं ययौ ॥ २७२ ॥
तत्रोद्यानेऽशोकखण्डेऽधोऽशोकद्रोः शिलातले । कृताष्टमप्रभुर्भेजे प्रतिमामेकरात्रिकीम् ॥ २७३ ॥
इतश्चात्रैव भरते विन्ध्यपादतलस्थिते । बिभेले सन्निवेशेऽभूद्धनवान् पूरणो गृही ॥ २७४ ॥
निशीथे सोऽन्यदा दध्यौ नूनं पूर्वभवे मया । कृतं महत्तपो येन श्रीरियं मान्यता च मे ॥ २७५ ॥

---

१ दिविषदा देवानां ध्वनिम् । २ भक्तिविहीनमभक्तिविहीनं च ।

फलं प्राक्कर्मणामत्र प्राप्यते हि शुभाशुभम् । सेव्यसेवकभावेन तज्जनेष्वनुमीयते ॥ २७६ ॥
गृहवासं परित्यज्य स्वजनान्प्रतिबोध्य च । [1]एष्यद्भवे फलप्राप्त्यै चरिष्यामि तपो यतः ॥ २७७ ॥
[2]मासैरष्टभिरह्नादिपूर्वेण वयसायुषा । तत्कर्तव्यं मनुष्येण येनान्ते सुखमेधते ॥ २७८ ॥
एवं विचिन्त्य स प्रातर्भोजयित्वा स्वकाञ्जनान् । आपृच्छ्य च व्रतकृते स्वपदे तनयं न्यधात् ॥ २७९ ॥
स्वयं तु नाम्ना प्राणामं तापसव्रतमाददे । चतुःपुटं दारुमयं भिक्षापात्रमथाग्रहीत् ॥ २८० ॥
आरभ्य तद्दिनादेव सदा षष्ठानि सोऽकरोत् । आत्मानमातापनया कृशयामास चान्वहम् ॥ २८१ ॥
प्राप्ते च पारणदिने भाजनं तच्चतुःपुटम् । गृहीत्वा प्रययौ भिक्षाकृते मध्यंदिनक्षणे ॥ २८२ ॥
क्षिप्तामाद्ये पुटे भिक्षां पान्थादीनामदत्त सः । द्वितीयपुटभिक्षां च काकादिभ्यः पुनर्ददौ ॥ २८३ ॥
मत्स्यादिजलचारिभ्यस्तृतीयपुटगामदात् । रागद्वेषौ विनाभुंक्त चतुर्थपुटगां स्वयम् ॥ २८४ ॥
एवं द्वादशवर्षाणि कृत्वा बालतपः स तु । विभेलसन्निवेशस्यैशान्यामनशनं ललौ ॥ २८५ ॥
मासं सोऽनशनं कृत्वा मृत्वा बालतपोवशात् । अभूच्चमरचंचायां चमरेन्द्रो[3]ऽर्णवस्थितिः ॥ २८६ ॥
उत्पन्नमात्रो भुवनान्तराण्यवधिचक्षुषा । प्राक् पश्यन्नूर्ध्वमपि हि सौधर्मेन्द्रं ददर्श सः ॥ २८७ ॥
स्थितं विमाने सौधर्मावतंसे वज्रधारिणम् । शक्रं महर्द्धिं स प्रेक्ष्य क्रुद्धोऽवोचदिति स्वकान् ॥ २८८ ॥
अप्रार्थितप्रार्थकोऽयं को नु मे शिरसि स्थितः । दुरात्मा विलसत्येवं निर्लज्जः सुरपांसनः ॥ २८९ ॥

---

१ आगामिभवे । २ अष्टभिर्मासैस्तत्कर्तव्य येन कृतेनान्ते मासाष्टकस्यान्ते सुखमेधते, एव आदिशब्दपूर्वेण वयसा, आयुषा च योज्यम् । ३ सागरोपमायुष्कः ।

सामानिकाद्यास्ते मूर्ध्नि निबद्धाञ्जलयोऽवदन् । अयं सौधर्मकल्पेन्द्रो महौजाश्चंडशासनः ॥ ३९० ॥
तच्छ्रुत्वाभ्यधिकं क्रुद्धो भ्रुकुटीभीषणाननः । [1]नासासूत्कारपर्यस्तचमरश्[2]चमरोऽवदत् ॥ ३९१ ॥
मद्विक्रमानभिज्ञाः स्थ तद्यूयं तं प्रशंसथ । एष वो दर्शयिष्यामि स्वबलं तस्य पातनात् ॥ ३९२ ॥
उच्चस्थानस्थितो दैवात् प्रभुर्नैतावताप्ययम् । [3]गजशारीनिविष्टः किं [4]काकोलो रथिकीभवेत् ॥ ३९३ ॥
यत्[5] स्थितस्तत् स्थितोऽसौ भो मयि क्रुद्धे त्वतः परम् । न स्थास्यत्युदिते ह्यर्के न तेजांसि तमांसि च ३९४
अथ सामानिकाः प्रोचुरयं पूर्वभवार्जितैः । पुण्यैर्दिविषदीशोऽभूदधिकर्द्धिपराक्रमः ॥ ३९५ ॥
त्वं स्वपुण्यानुमानेन प्रभुरस्मादृशामभूः । पुण्याधीनो हि विभवस्तदीर्ष्यामिह मा कृथाः ॥ ३९६ ॥
विक्रमोपक्रमो ह्यस्मिन् क्रियमाणस्त्वया भवेत् । उपहासाय पाताय शर[6]भस्यांबुदेष्विव ॥ ३९७ ॥
तत्प्रशाम्य सुखं तिष्ठ भुंक्ष्व भोगान् यथासुखम् । विनोदान् पश्य विविधान् सेव्यमानोऽस्मदादिभिः ३९८
अथ तांश्चमरोऽवोचद्यूयं तद्भीरवो यदि । ननु तत्तिष्ठतात्रैव यास्याम्येकोऽपि तद्युधे ॥ ३९९ ॥
सुराणामसुराणां च स्यादिन्द्रः सोऽथवाप्यहम् । [7]प्रत्याकारे यदेकस्मिन् युगपन्न [8]ह्यसिद्वयम् ॥ ४०० ॥
इत्यूर्जितं स गर्जित्वा समुत्पिपतिषुर्दिवि । किंचिज्जातविवेकः सन् भूयोऽप्येवमचिन्तयत् ॥ ४०१ ॥
अमी सामानिकाः शक्रं शक्तमाचक्षते यथा । भविष्यति तथा किंचिन्न खल्वेते ममाहिताः ॥ ४०२ ॥
कार्यगतिर्विषमा च दैवाच्चेन्मे पराजयः । तदा कं शरणं यास्याम्यमुष्मादधिकौजसः ॥ ४०३ ॥

---

१ नासिकायाः सूत्कारशब्देन पर्यस्तानि उत्क्षिप्तानि चमराणि येन सः । २ चमरेन्द्रः । ३ गजस्य शारी वर्म तत्र स्थितः । ४ काकविशेषः । ५ यदियन्तं कालं स्थितस्तत् स्थितः । ६ शरभोऽष्टापदो मृगः । ७ कोशे । ८ खड्गद्वयम् ।

एवं विचिन्त्य प्रायुंक्तावधिं सोऽथ ददर्श च । सुंसुमारपुरे वीरस्वामिनं प्रतिमास्थितम् ॥ ४०४ ॥
निश्चित्य शरणीकार्यं श्रीवीरं चमरासुरः । उत्थायागात् प्रहरणशालां तुंबालयाह्वयाम् ॥ ४०५ ॥
जग्राह तत्र परिघं मृत्योर्भुजमिवापरम् । चिक्षेश्च चालयामास तिर्यगूर्ध्वं च स द्रुतम् ॥ ४०६ ॥
वीर इत्यसुरस्त्रीभिर्वीक्ष्यमाणः सकामनम्[1] । उत्साह्यमानो भुवनपतिभिः कौतुकार्थिभिः ॥ ४०७ ॥
उपेक्ष्यमाणोऽज्ञ इति निजैः सामानिकासुरैः । पुर्याश्चमरचंचाया निर्ययौ चमरासुरः ॥ ४०८ ॥
॥ युग्मम् ॥
क्षणाच्छ्रीवीरमासाद्य मुक्त्वा परिघमायुधम् । स त्रिः प्रदक्षिणीकृत्य नत्वा चैवं व्यजिज्ञपत् ॥ ४०९ ॥
भगवंस्त्वत्प्रभावेण शक्रं जेष्यामि दुर्जयम् । सोऽत्यन्तं बाधते मां हि मन्मूर्ध्नः उपरि स्थितः ॥ ४१० ॥
इत्युक्त्वादाय परिघमैशान्यामुपसृत्य च । सद्यो विचक्रे स्वं रूपं प्रमाणे लक्षयोजनम् ॥ ४११ ॥
मूर्तीभूतमिव व्योम श्यामच्छविमहातनुः । नन्दीश्वरमहाद्वीपाञ्जनाद्रिरिव जंगमः ॥ ४१२ ॥
दंष्ट्राक्रकचभीमास्यो विलोलश्यामकुन्तलः । वक्त्रकुंडोच्छलज्ज्वालाजालपल्लविताम्बरः[2] ॥ ४१३ ॥
पृथुवक्षस्थलाभोगस्थगितादित्यमंडलः[3] । दोर्दंडप्रेंखण[4]भ्रश्यद्ग्रहनक्षत्रतारकः ॥ ४१४ ॥
नाभीमंडलसंलीनफणिफूत्कारदारुणः । शैलचूलाग्रसंलग्नजानूजनितविस्मयः ॥ ४१५ ॥

---

१ कामनासहितं यथा तथा । २ वक्त्रमेव कुण्डं तस्मादुच्छलन् यो ज्वालासमूहस्तेन पल्लवितमंबरं येन सः । ३ स्थगितमाच्छादितम् । ४ प्रेंखणं चलनम् ।

पादावष्टम्भ[1]विधुरीकृतभूमंडलोऽथ सः । समुत्पपात दर्पान्धः सौधर्माधिपतिं प्रति ॥ ४१६ ॥

॥ पंचभिः कुलकम् ॥

ऊर्जितैर्गर्जितैः सर्वं ब्रह्मांडं स्फोटयन्निव । व्यन्तरान् भीषयमाणो भीष्मोऽन्तक इवापरः ॥ ४१७ ॥
ज्योतिष्कांस्त्रासयन्नुच्चैः कुरंगानिव केसरी । क्षणात्प्रापाति[2]सूर्येन्दुमंडलः शक्रमंडलम् ॥ ४१८ ॥
निलिल्यिरे किल्बिषिकास्तत्रसुश्चाभियोगिकाः । सेनान्योऽपि समं सैन्यैरकस्मादपि दुद्रुवुः ॥ ४१९ ॥
पलायन्ते स्म दिक्पालाः सोमवैश्रवणादयः । वेगेनापततस्तस्माद्भयंकरमहातनोः ॥ ४२० ॥
आत्मरक्षैरस्खलितो वेत्रिणाप्यनिवारितः । किमेतदिति संभ्रान्तैस्त्रायस्त्रिंशैर्निरीक्षितः ॥ ४२१ ॥
सकोपविस्मयैर्दृष्टः सोऽथ सामानिकैर्न्यधात् । एकं क्रमं[3] पद्मवेद्यां सुधर्मायामथापरम् ॥ ४२२ ॥

॥ युग्मम् ॥

परिघेणेन्द्रकीलं त्रिस्ताडयित्वा स दुर्मदः । उत्कटां भ्रकुटिं बिभ्रच्छक्रमेवमवोचत ॥ ४२३ ॥
एवंविधानां वृन्देन षिङ्गानाम्[4]इव नाकिनाम् । ओजसा किं विरोजस्त्वं ममोपर्यवतिष्ठसे ॥ ४२४ ॥
अधुना पातयामि त्वामधस्तादात्मनोऽपि हि । मुधा चिरं स्थितोऽसीह शैलाग्र इव मौकुलिः[5] ॥ ४२५ ॥
पुर्याश्चमरचंचायाः स्वामिनं चमरासुरम् । किं मामपि न जानासि विश्वासह्यपराक्रमम् ॥ ४२६ ॥
केसरीव व्याधहक्कां तादृक्षं पुरुषं वचः । अनाकर्णितपूर्वोन्द्रः सिष्मियेऽथ विसिष्मिये ॥ ४२७ ॥

---

१ पदन्यासेन विधुरीकृतं भयविह्वलीकृतं भूमडलं येन सः । २ सूर्यचंद्रमंडलमतिक्रान्तः । ३ पादम् । ४ जारपुरुषाणामिव । ५ काकः ।

ज्ञात्वावधेस्तं चमरं रे रे नश्येत्यथ ब्रुवन् । भ्रृकुटीमिव दुर्दर्शं शक्रो दंभोलि[1]मुद्दधे ॥ ४२८ ॥
सारं कल्पानलस्येव विद्युतामिव संचयम् । वृन्दीभूतमिवौर्वाग्निज्वालेन्द्रं सोऽमुचत्पविम् ॥ ४२९ ॥
तडत्तडिति कुर्वाणं त्रस्तगीर्वाणवीक्षितम् । गीर्वाणपतिमुक्तं तच्चमरं प्रत्यधावत ॥ ४३० ॥
अर्कतेज इवोलूको द्रष्टुमप्यक्षमः पविम् । वल्गुली[2]वोर्ध्वपादोऽधोमौलिर्बभ्रंश सोऽसुरः ॥ ४३१ ॥
भगवन्तं महावीरं प्रपित्सुः[3] शरणं ततः । द्राक् पलायिष्ट चमरश्चमर[4]श्चित्रकादिव ॥ ४३२ ॥
महाहेरिव मंडूक उरभ्र[5] इव दन्तिनः । कुञ्जरः शरभस्येव गरुडस्येव पन्नगः ॥ ४३३ ॥
अनात्मज्ञः कथमरे युयुत्सुरसुराधम । शक्रस्यास्फलित इति स नश्यन्नहसेऽमरैः ॥ ४३४ ॥
॥ युग्मम् ॥

योऽभूत्ताद्ङ्महादेहो लघुदेहः क्षणेन सः । वाताहत इवांभोदस्त्वरितत्वरितं ययौ ॥ ४३५ ॥
तस्याणूकृतरूपस्य गोधाया इव पृष्ठतः । समापतन्नशोभिष्ट ज्वालाजालाकुलोऽशनिः[6] ॥ ४३६ ॥
इतश्च वज्रे निर्मुक्तमात्रे वज्रीत्यचिन्तयत् । नासुराणामिहागन्तुं शक्तिः संभवति स्वतः ॥ ४३७ ॥
अर्हन्तमर्हच्चैत्यं वा महर्षिं कंचनाथ वा । मन्ये मनसिकृत्यासौ जातशक्तिरिहाययौ ॥ ४३८ ॥
विचिन्त्येत्यवधेः शक्रोऽज्ञासीत् स्वामिप्रभावतः । तत्रायातं चमरेन्द्रं यान्तं च स्वामिनं प्रति ॥ ४३९ ॥
हा हा हतोऽस्मीति वदन्निन्द्रः कुलिशवर्त्मना । द्रुतद्रुतमधाविष्ट त्रुटद्धारादिभूषणः ॥ ४४० ॥

१ वज्रम् । २ वल्गुली पक्षिणीविशेषः भाषायां " वडवानरी " इति ख्यातम् । ३ प्रपत्तुं प्राप्तुमिच्छुः । ४ चमरमृगः । ५ अजः । ६ वज्रम् ।

अधस्तान्निजभूमित्वाच्चमरस्तत्र चाग्रतः । तत्पृष्ठतोऽगाद्दंभोलिर्वज्री तत्पृष्ठतः पुनः ॥ ४४१ ॥
पश्चात्प्रचलितोऽपीन्द्रो निजशक्त्यातिवेगवान् । करीव प्रतिकारस्य तयोर्निकटवर्त्यभूत् ॥ ४४२ ॥
आसन्नप्रायकुलिशः कथंचित्प्राप सोऽसुरः । प्रतिमास्थं महावीरं दवार्तद्विपवन्नदीम् ॥ ४४३ ॥
शरणं शरणमिति ब्रुवाणः स्वामिपादयोः । अन्तरे सूक्ष्मकीभूय कुन्थुवच्चमरोऽविशत् ॥ ४४४ ॥
चतुरंगुलमप्राप्तं स्वामिपादारविन्दयोः । वज्रं मुष्ट्याग्रहीद्वज्री सर्पं गारुडिको यथा ॥ ४४५ ॥
प्रभुं प्रदक्षिणीकृत्य वन्दित्वा च पुरन्दरः । कृताञ्जलिरुवाचैवं भक्तिनिर्भरया गिरा ॥ ४४६ ॥
नाज्ञासिषं यथा स्वामिपादपद्मप्रभावतः । आगमच्चमरेन्द्रो मामुपद्रोतुं समुद्धतः ॥ ४४७ ॥
अज्ञानादमुचं वज्रं पश्चाच्चावधिनाबुधम् । अमुं त्वत्पादसंलीनं सहस्वाग इदं मम ॥ ४४८ ॥
इत्युक्त्वा शक्र ऐशान्यां स्थित्वा वामाङ्घ्रिणा भुवम् । रोषनाशाय भित्त्वा त्रिश्चमरेन्द्रमदोऽवदत् ४४९
भो भोः साधु त्वया चक्रे यद्विश्वाभयदः प्रभुः । शिश्रिये शरणायायं गुरुः सर्वगरीयसाम् ॥ ४५० ॥
मया वैरं समुत्सृज्य मुक्तोऽसि चमरासुर । गत्वा चमरचंचायां स्वऋद्धिसुखभाग्भव ॥ ४५१ ॥
एवं चमरमाश्वास्य भूयोऽपि परमेश्वरम् । नमस्कृत्य प्रतिययौ निजं स्थानं पुरन्दरः ॥ ४५२ ॥
गते शक्रे चमरेन्द्रः प्रभोः पादद्वयान्तरात् । निरागादस्तमितेऽर्के गुहाया इव कौशिकः[1] ॥ ४५३ ॥
स प्रणम्य जगन्नाथमित्यूचे रचिताञ्जलिः । अशेषजीवजीवातो[2] त्वमेव मम जीवदः ॥ ४५४ ॥
अनेकदुःखनिलयाद्विमुच्यन्ते भवादपि । त्वत्पादौ शरणं प्राप्ताः किं पुनः कुलिशादहम् ॥ ४५५ ॥

---

१ घूकः । २ समग्रजीवाना जीवनौषध ।

अहं पूर्वभवेऽप्यज्ञोऽकार्षं बालतपः प्रभो । अज्ञतासहितं प्रापमासुरेन्द्र्यं च तत्फलम् ॥ ४५६ ॥
मया स्वयमनर्थोऽयमज्ञानादात्मनः कृतः । इदमेव कृतं सुष्ठु यत्त्वं शरणमाश्रितः ॥ ४५७ ॥
शरणं प्राग्भवेऽपि त्वामकरिष्यमहं यदि । प्राप्स्यमप्यच्युतेन्द्रत्वमहमिन्द्रत्वमप्यथ ॥ ४५८ ॥
यदि वा कृतमिन्द्रत्वैः सर्वं प्राप्तं मया प्रभो । जगत्त्रितयनाथत्वं नाथः प्राप्तोऽधुनापि यत् ॥ ४५९ ॥
सश्रद्धमभिधायैवं नत्वा च परमेश्वरम् । पुर्यां चमरचंचायां जगाम चमरासुरः ॥ ४६० ॥
तत्र सिंहासनासीनश्चमरेन्द्रस्त्रपानतः[1] । अवोचत स्वागतिकान्[2] निजान् सामानिकादिकान् ॥ ४६१ ॥
यथा हि मध्यस्थतया शक्रो युष्माभिरौच्यत । स तथैव परं मोहादज्ञायि न मया तथा ॥ ४६२ ॥
तत्सद्मागमं सिंहकन्दरामिव जंबुकः[3] । उपेक्ष्यमाणस्तल्लोकैः कौतुकस्य दिदृक्षया ॥ ४६३ ॥
शक्रनिर्मुक्तकुलिशात् कृच्छ्रान्मुक्तो गतोऽस्म्यहम् । शरणं वीरचरणौ सुरासुरनमस्कृतौ ॥ ४६४ ॥
श्रीवीरशरणस्थोऽहं जीवन्मुक्तो बिडौजसा । इहागच्छ चलत भो गत्वा वन्दामहे जिनम् ॥ ४६५ ॥
इत्युक्त्वा सपरीवारश्चमरः प्रभुमाययौ । नत्वा चक्रे च संगीतं जगाम स्वां पुरीं ततः ॥ ४६६ ॥
प्रातर्नाथोऽपि संहृत्य प्रतिमामेकरात्रिकीम् । क्रमेण विहरन् प्राप पुरं भोगपुराभिधम् ॥ ४६७ ॥
माहेन्द्रक्षत्रियस्तत्र जिनेन्द्रं प्रेक्ष्य दुर्मतिः । खर्जूरीयष्टिमुद्यम्य प्रजिहीर्षुरधावत ॥ ४६८ ॥
चिरदर्शनसोत्कंठो द्रष्टुं च स्वामिनं तदा । आगात् सनत्कुमारेन्द्रस्तत्रापश्यच्च तं शठम् ॥ ४६९ ॥
निर्भर्त्स्य च क्षत्रियं तमिन्द्रः प्रभुमवन्दत । भक्त्या सुखविहारं चापृच्छत् स्वं च पदं ययौ ॥ ४७० ॥

१ त्रपया लज्जया नतः । २ स्वागतकारिणः । ३ शृगालः ।

नन्दिग्रामं ययौ ग्रामं विहरन् भगवानपि । नन्दिना पितृमित्रेण भक्तितस्तत्र चार्च्यत ॥ ४७१ ॥
ग्रामेऽथ मेढकग्रामे भगवान् विहरन् ययौ । दधावे तत्र हन्तुं च गोपालो वालरज्जुभृत्[1] ॥ ४७२ ॥
कूर्मारग्रामवत्तत्र भ्रन्तमेत्य पुरन्दरः । गोपं निवारयामास ववन्दे च जगद्गुरुम् ॥ ४७३ ॥
ततो निःक्रम्य भगवान् कौशांबीं नगरीं ययौ । राजा तस्यां शतानीकः परानीकजयंकरः ॥ ४७४ ॥
चेटकोर्वीशदुहिता तद्राज्ञी च मृगावती । श्राविका तीर्थकृत्पादपूजानिष्ठा सदैव हि ॥ ४७५ ॥
राज्ञस्तस्य च सचिवः सुगुप्तो नाम तत्प्रिया । नन्दा नाम श्राविकेति मृगावत्याः पेरा[2] सखी ॥ ४७६ ॥
श्रेष्ठी धनावहो नाम्ना तत्र चासीन्महाधनः । मूलाभिधाना तस्यापि गृहिणी गृहकर्मठा ॥ ४७७ ॥
तत्र स्वामी पौषमासबहुल[3]प्रतिपद्दिने । दुराचरं दुर्ग्रहं च जग्राहैवमभिग्रहम् ॥ ४७८ ॥
अयोनिगडबद्धांघ्रिर्मुण्डिताऽनशिता सती । रुदती मन्युना[4] राजकन्यापि प्रेष्यतां[5] गता ॥ ४७९ ॥
देहल्यन्तः स्थितैकांघ्रिर्बहिः क्षिप्तापरांघ्रिका । गृहात् प्रतिनिवृत्तेषु सर्वभिक्षाचरेषु च ॥ ४८० ॥
यदि मे शूर्पकोणेन कुल्माषान् संप्रदास्यति । चिरेणापि तदैवाहं पारयिष्यामि नान्यथा ॥ ४८१ ॥
त्रिभिर्विशेषकम् ॥

गृहीत्वालक्ष्यमाणाभिग्रहं प्रतिदिनं प्रभुः । उच्चावचेषु गेहेषु भ्रमति स्म यथाक्षणम् ॥ ४८२ ॥
अभिग्रहवशाद्भिक्षां दीयमानामगृह्णति । स्वामिनि प्रत्यहं पौरास्ताम्यन्ति स्मात्मनन्दिनः ॥ ४८३ ॥
अनात्तभिक्षः स्वाम्येवं द्वाविंशतिपरीषहीम् । सहमानोऽनयन्मासांश्चतुरः प्रहरानिव ॥ ४८४ ॥

१ केशनिर्मितरज्जुभृत् । २ श्रेष्ठा । ३ बहुलः कृष्णपक्षः । ४ शोकेन । ५ दासत्वम् ।

भिक्षार्थमन्यदा स्वामी सुगुप्तामात्यवेश्मनि । प्रविवेश ददृशे च दूरादपि च नन्दया ॥ ४८५ ॥
अयमर्हन्महावीरो दिष्ट्या मद्गृहमागतः । इति ब्रुवाणाभ्युत्तस्थौ नन्दानन्देन पूरिता ॥ ४८६ ॥
कल्पनीयानि भोज्यानि साभिक्षा समुपानयत् । स्वाम्यप्यभिग्रहवशात्तान्यनादाय निर्ययौ ॥ ४८७ ॥
धिगहं मन्दभाग्यास्मि न पूर्णो मे मनोरथः । इति खेदं दधारोच्चैर्नन्दा मन्दमनाः सती ॥ ४८८ ॥
तां सखेदां च दास्यूचे देवार्योऽयं दिने दिने । अनात्तभिक्षो निर्याति न खल्वद्यैव निर्गतः ॥ ४८९ ॥
एवमाकर्ण्य नन्दापि बुबुधे यदभिग्रहः । विशिष्टः कोऽपि तन्नोपादत्तेऽसौ प्रासुकान्यपि ॥ ४९० ॥
स्वामिनोऽभिग्रहो ज्ञेयः कथं न्विति विचिन्तया । निरानन्दैव नन्दास्थात् सुगुप्तस्तां ददर्श च ॥४९१॥
सुगुप्तस्तामुवाचैवं किमुद्विग्नेव लक्ष्यसे । खंडिताज्ञासि किं केनाप्यपराद्धं मयाथवा ॥ ४९२ ॥
साप्यूचे खंडिता नाज्ञा नापराधस्तवापि च । न पारयामि श्रीवीरमिति खेदाय किं तु मे ॥ ४९३ ॥
भिक्षार्थी भगवान् वीरो नित्यमायाति याति च । अनात्तभिक्ष एवायमभिग्रहविशेषतः ॥ ४९४ ॥
जानीह्यभिग्रहं भर्तुर्न चेज्जानासि तन्मुधा । बुद्धिस्तव महामात्य परचित्तोपलक्षिणी ॥ ४९५ ॥
सुगुप्तोऽपि जगादैवं जगद्भर्तुरभिग्रहः । यथा विज्ञास्यते प्रातः प्रयतिष्ये तथा प्रिये ॥ ४९६ ॥
तदैवागान्मृगावत्या वेत्रिणी विजयाह्वया । तयोः श्रुत्वा तमालापं गत्वा देव्याः शशंस च ॥ ४९७ ॥
तथैव खेदं विदधे मृगावत्यपि तत्क्षणम् । संभ्रान्तश्च शतानीकोऽपृच्छत्तां खेदकारणम् ॥ ४९८ ॥
किंचिदुन्नमितभ्रूका व्याजहार मृगावती । अन्तर्विषादकालुष्योद्गारक्षुरितया[1] गिरा ॥ ४९९ ॥

१ अन्तर्मनसि विषादेन यत् कालुष्यं मालिन्यं तस्योद्गारेण क्षुरितया व्याप्तया ।

चराचरं जगदिदं चरैर्जानन्ति भूभुजः । त्वं तु स्वपत्तनमपि न वेत्सि ब्रूमहेऽत्र किम् ॥ ५०० ॥
त्रैलोक्यपूज्यो भगवान् वीरश्चरमतीर्थकृत् । वसत्यत्रेति किं वेत्सि राज्यसौख्यप्रमद्वरः ॥ ५०१ ॥
वेश्म वेश्मानुप्रवेशं भिक्षामपरिगृह्य सः । कुतोऽप्यभिग्रहाद्यातीत्येतज्जानासि किं ननु ॥ ५०२ ॥
धिङ्मां धिक् त्वाममात्यान् धिग्यदत्र परमेश्वरः । अज्ञाताभिग्रहोऽनात्तभिक्षस्तस्थावियच्चिरम् ॥५०३॥
प्रत्यभाषिष्ट भूपोऽपि साधु साधु शुभाशये । प्रमादी शिक्षितोऽस्म्येष स्थाने धर्मविचक्षणे ॥ ५०४ ॥
विज्ञायाभिग्रहं प्रातः कारयिष्यामि पारणम् । विश्वस्वामिनमित्युक्त्वा राज्ञा सचिवमाह्वत ॥ ५०५ ॥
अमात्यमूचे नृपतिर्मत्पुर्यां त्रिजगद्गुरुः । अनात्तभिक्षश्चतुरो मासांस्तस्थौ धिगत्र नः ॥ ५०६ ॥
ज्ञातव्योऽभिग्रहो भर्तुः संपूर्याभिग्रहं यथा । कारयामि पारणकं जगन्नाथं स्वशुद्धये ॥ ५०७ ॥
अमात्योऽप्यब्रवीद्भर्तुर्ज्ञायतेऽभिग्रहो न हि । इति खिद्येऽहमप्युच्चैरुपायः कोऽपि सूत्र्यताम् ॥ ५०८ ॥
अथ राजा समाह्वाय्य नामतस्तथ्यवादिनम् । उपाध्यायं धर्मशास्त्रविचक्षणमवोचत ॥ ५०९ ॥
आचाराः सर्वधर्माणां शास्त्रे तव महामते । कीर्त्यन्ते तत्समाख्याहि जिनभर्तुरभिग्रहम् ॥ ५१० ॥
उपाध्यायोऽप्यभाषिष्ट बहवोऽभिग्रहाः खलु । महर्षीणां द्रव्यक्षेत्रकालभावविभेदतः ॥ ५११ ॥
अभिग्रहो भगवता गृहीतोऽयमिति ध्रुवम् । विना विशिष्टज्ञानेन ज्ञायते न हि जातुचित् ॥ ५१२ ॥
राजाथाघोषयत्पुर्यां यदभिग्रहिणः प्रभोः । अनेकधोपनेतव्या भिक्षा भिक्षार्थमेयुषः ॥ ५१३ ॥
राजाज्ञया श्रद्धया च तथा चक्रे जनोऽखिलः । अपूर्णाभिग्रहः स्वामी भिक्षां जग्राह न क्वचित् ॥५१४॥

---

१ तस्य ।

अम्लानांगस्तथाप्यस्थाद्विशुद्धज्ञानभाक् प्रभुः । व्रीडाखेदाकुलैः पौरैर्वीक्ष्यमाणो दिने दिने ॥ ५१५ ॥
इतश्च पूर्वं नौसैन्यैः शतानीको निशैकया । गत्वारुणत् पुरीं चंपां [1]कंपासमसमागमः ॥ ५१६ ॥
चंपापतिः पलायिष्ट ततश्च दधिवाहनः । बलीयसावरुद्धानां [2]त्राणं नान्यत्पलायनात् ॥ ५१७ ॥
[3]यद्ग्रहो घोषितस्तत्र शतानीकेन भूभुजा । तदनीकभटाश्चंपां स्वेच्छया मुमुषुस्ततः ॥ ५१८ ॥
दधिवाहनराजस्य धारिणीं नामतः प्रियाम् । वसुमत्या समं पुत्र्या तत्र कोऽप्यौष्ट्रिकोऽग्रहीत् ॥ ५१९ ॥
कृतकृत्यः शतानीकोऽप्यनीकैः परिवारितः । समाजगाम कौशांबीं [4]वैरिकैरवभास्करः ॥ ५२० ॥
औष्ट्रिकः सोऽपि धारिण्या देव्या रूपेण मोहितः । व्यजज्ञगाद पुरतो जनानामिदमुच्चकैः ॥ ५२१ ॥
प्रौढा रूपवती चेयं मम भार्या भविष्यति । विक्रेष्ये कन्यकां त्वेतां नीत्वा पुर्यांश्चतुष्पथे ॥ ५२२ ॥
तच्छ्रुत्वा धारिणी देवी मनस्येवमधारयत् । जाता महति वंशेऽहं [5]शशांकादपि निर्मले ॥ ५२३ ॥
महावंशप्रसूतस्य दधिवाहनभूपतेः । पत्नी चास्मि परिणतजैनधर्मा[6]दितोऽपि च ॥ ५२४ ॥
श्रुत्वैतान्यप्यक्षराणि धिग्जीवाम्यघ[7]भाजनम् । स्वभावलोल रे जीव किमद्याप्यवतिष्ठसे ॥ ५२५ ॥
न चेत् स्वयं निःसरसि तथापि हि बलान्मया । निस्सार्यसे सद्य एव नीडादिव विहंगमः ॥ ५२६ ॥
इति तद्भर्त्सनोद्विग्ना इव प्राणाः क्षणादपि । तस्या मन्युप्रस्फुटितहृदयाया विनिर्ययुः ॥ ५२७ ॥
औष्ट्रिकस्तां मृतां प्रेक्ष्य दध्यावेतां सतीं प्रति । धिग्धिग्मयैतदुदितं यन्मे पत्नी भविष्यति ॥ ५२८ ॥

१ झंपा प्लुतगतिस्तत्समः समागमो यस्य सः । २ रक्षणम् । ३ यत् किमपि गृह्यतामिति यस्मिन् घोषे स यद्ग्रहः । ४ वैरिणः शत्रव एव कैरवाणि कुमुदानि तेषु सूर्यः । ५ चन्द्रादपि । ६ प्रथमतोऽपि । ७ पापभाजनम् ।

अंगुलीदर्शनेनेव कूष्मांडं दुर्गिरा मम । विपन्नेयं यथा तद्वत् कन्याप्येषा विपत्स्यते ॥ ५२९ ॥
एवं विमृश्य साम्ना तामालपन्ननयत् पुरि । कौशाम्ब्यां सोऽथ निदधे विक्रेतुं राजवर्त्मनि ॥ ५३० ॥
दैवात्तत्रागतः श्रेष्ठी तामपश्यद्धनावहः । दध्यौ चेत्यनया मूर्त्या न हि सामान्यपुत्र्यसौ ॥ ५३१ ॥
भ्रष्टा पितृभ्यां प्राप्तेयं निर्घृणेनामुनाधुना । यूथच्युता कुरंगीव लुब्धकेन दुरात्मना ॥ ५३२ ॥
विक्रेतुं पल्लवच्चेह[1] स्थापितानेन मूल्यतः । हस्ते हीनस्य कस्यापि हा यास्यति वराक्यसौ ॥ ५३३ ॥
दत्वार्थं वहुमप्यस्य गृह्णाम्येतां कृपास्पदम् । पुत्रीमिव निजां हीमां न क्षमोऽहमुपेक्षितुम् ॥ ५३४ ॥
विनाऽनर्थं[3] मम गृहे तिष्ठन्त्याः क्रमयोगतः । अस्याः स्वजनवर्गेण भविता संगमोऽपि हि ॥ ५३५ ॥
धनावहो विमृश्यैवं दत्वा मूल्यं तदीप्सितम् । निन्ये वसुमतीं वालां सानुकंपः स्ववेश्मनि ॥ ५३६ ॥
सोऽपृच्छत् स्वच्छधीस्तां च वत्से कस्यासि कन्यका । को वा स्वजनवर्गस्ते मा भैषीर्दुहितासि मे ॥५३७॥
महत्वेन समाख्यातुं स्वकुलं सापि चाक्षमा । न किंचिदूचेऽस्थात्तस्थौ नलिनीव त्वधोमुखी ॥ ५३८ ॥
मूलां च श्रेष्ठिनीमूचे प्रियेऽसौ दुहितावयोः । पाल्या लाल्या च तदियमतियत्नेन पुष्पवत् ॥ ५३९ ॥
एवं श्रेष्ठिगिरा तत्र गेहेऽवात्सीत्स्वगेहवत् । वाला बालेन्दुलेखेव सा नेत्रानन्ददायिनी ॥ ५४० ॥
तस्या विनयवाक्शीलै रञ्जितश्चन्दनोपमैः । चन्दनेत्यभिधां श्रेष्ठी ददौ परिजनैः सह ॥ ५४१ ॥
ईषच्च यौवनारंभं करभोरू[4]रवाप सा । राका[5]रात्रिरिवांभोधेः श्रेष्ठिनो ददती मुदम् ॥ ५४२ ॥
निसर्गतो रूपवतीं यौवनेन विशेषतः । निरीक्ष्य चन्दनां मूला दध्यावेवं समत्सरा ॥ ५४३ ॥

---

१ मांसवत् । २ दीना । ३ अपायम् । ४ करभस्येवोरू यस्याः सा । ५ पूर्णिमारात्रिः ।

पुत्रीवत्प्रतिपद्यापि यद्येतां रूपमोहितः । श्रेष्ठी परिणयेत्तर्हि जीवन्त्यपि मृतास्मि हा ॥ ५४४ ॥
एवं स्त्रैणसुलभेन तुच्छत्वेन दिवानिशम् । तदा प्रभृति ताम्यन्ती तस्थौ मूला दुराशया ॥ ५४५ ॥
ग्रीष्मोष्मार्तोऽन्यदा श्रेष्ठी वेश्मन्यागमदापणात् । तदाङ्घ्रिक्षालको नासीत् कोऽपि दैवात् पुरःसरः[1] ५४६
विनीता चन्दनोत्थाय श्रेष्ठिना वारितापि हि । प्रावर्तत क्षालयितुं तत्पादौ पितृभक्तितः ॥ ५४७ ॥
केशपाशस्तदा तस्याः स्निग्धश्यामलकोमलः । निःसहाङ्ग्याः[2] परिस्रस्तः क्ष्मातले जलपंकिले ॥ ५४८ ॥
वत्सायाः केशपाशोऽयं मा भूद्भूपंकभागिति । लीलायष्ट्योद्दधे[3] श्रेष्ठी तमबध्नाच्च सादरः ॥ ५४९ ॥
तच्च मूला गवाक्षस्था निरीक्ष्यैवमचिन्तयत् । वितर्कः संवदति स यः पूर्वं कल्पितो मया ॥ ५५० ॥
अस्याः स्वयं केशबन्धः पत्नीत्वस्य निबन्धनम् । प्रथमं श्रेष्ठिनो नूनं नेदृशी हि पितुः क्रिया ॥ ५५१ ॥
उच्छेदनीया तदियं मूलाद्व्याधिरिवोत्थितः । इति निश्चित्य मूलास्थाच्छाकिनीव दुराशया ॥ ५५२ ॥
क्षणं श्रेष्ठ्यपि विश्रम्य पुनरेव बहिर्ययौ । असुंरुयच्चन्दनां च मूलाप्याहूय नापितम् ॥ ५५३ ॥
पादयोर्निगडान् क्षिप्त्वा चन्दनां बह्वताडयत् । मूला वल्लीमिव वशा विवशा क्रोधराक्षसा ॥ ५५४ ॥
गृहैकदेशे दूरस्थे मूला न्यधित चन्दनाम् । कपाटसंपुटं[4] दत्त्वा परिवारमुवाच च ॥ ५५५ ॥
श्रेष्ठिनः पृच्छतोऽप्येतत् कथनीयं न केनचित् । कथयिष्यति यः कोऽपि मत्कोपाग्नेः स आहुतिः॥५५६॥
एवं नियंत्रणां कृत्वा मूला मूलगृहं ययौ । श्रेष्ठी च सायमायातोऽपृच्छत् क्व ननु चन्दना ॥ ५५७ ॥ ॥ ६० ॥
मूलात्रयान्न कोऽप्याख्यच्छ्रेष्ठी चैवमबुध्यत । वत्सा मे रमते क्वापि यद्वास्त्युपरि वेश्मनः ॥ ५५८ ॥

१ पुरः सरतीति पुरःसरः सेवकः । २ वलितदेहायाः । ३ क्रीडायष्ट्या । ४ द्वारसंपुटम् ।

एवं रात्रावप्यपृच्छन्न कोऽप्याख्यत्तथैव च । प्रसुप्ता चन्दनास्तीति चाज्ञासीदृजुधीः स तु ॥ ५५९ ॥
द्वितीयेऽप्यह्नि नापश्यत्तृतीयेऽपि तथैव ताम् । शंकाकोपाकुलः श्रेष्ठी प्रोचे परिजनं ततः ॥ ५६० ॥
रे रे कथयत क्वास्ति चन्दना मम नन्दना । नाख्यास्यथ विदन्तश्चेन्निग्रहीष्यामि वस्तदा ॥ ५६१ ॥
श्रुत्वेदं स्थविरा तत्र काचिच्चेटी व्यचिन्तयत् । जीविताहं चिरतरं प्रत्यासन्ना मृतिर्मम ॥ ५६२ ॥
कथिते चन्दनोदन्ते किं मूला मे करिष्यति । एवं विचिन्त्य तामाख्यन्मूलाचन्दनयोः कथाम् ॥५६३॥
श्रेष्ठिनोऽदर्शयद्गत्वा चन्दनारोधवेश्म सा । द्वारं चोद्घाटयामास स्वयं श्रेष्ठी धनावहः ॥ ५६४ ॥
तत्र च क्षुत्पिपासार्त्तां दवस्पृष्टां[1] लतामिव । निगडैर्यन्त्रितामङ्घ्योर्नवानीतां[2] करिणीमिव ॥ ५६५ ॥
परिमुंडितमुण्डां च भिक्षुकीमिव चन्दनाम् । अश्रुपूरितनेत्राभामीक्षांचक्रे धनावहः ॥ ५६६ ॥
॥ युग्मम् ॥
विश्वस्ता भव वत्से त्वमिति जल्पन्नुदश्रुदृक् । तद्भोज्यार्थं रसवतीं ययौ श्रेष्ठी द्रुतद्रुतम् ॥ ५६७ ॥
विशिष्टं[3] तत्र चापश्यन् भोज्यं दैवाद्धनावहः । कुल्माषान् शूर्पकोणस्थांश्चन्दनायै समार्पयत् ॥ ५६८ ॥
भुञ्जीथास्तावदेतांस्त्वं यावत्त्वन्निगडच्छिदे । कर्मारमानयामीति जल्पित्वा श्रेष्ठ्यगाद्बहिः ॥ ५६९ ॥
चन्दनोर्ध्वस्थिता चैवमचिन्तयदहो क्व मे । तस्मिन् राजकुले जन्म क्व चावस्थेयमीदृशी ॥ ५७० ॥
भवेऽस्मिन्नाटकप्राये क्षणाद्वस्त्वन्यथा भवेत् । स्वानुभूतमिदं मे हि किं संप्रति करोमि हा ॥ ५७१ ॥
षष्ठस्य पारणायामी कुल्माषाः सन्ति संप्रति । यद्यायात्यतिथिस्तस्मै दत्वा भुञ्जेऽन्यथा न हि ॥ ५७२ ॥

१ दवानलेन स्पृष्टाम् । २ नूतनगृहीताम्, तत्कालगृहीतामिति यावत् । ३ अवशिष्टम् । ४ अयस्कारम्-लोहकार ।

एवं विचिन्त्य सा द्वारे ददौ दृष्टिमितस्ततः । तदा चागान्महावीरो भिक्षायै पर्यटन् प्रभुः ॥ ५७३ ॥
अहो पात्रमहो पात्रमहो मे पुण्यसंचयः । मुनिर्महात्मा कोऽप्येष भिक्षायै यदुपस्थितः ॥ ५७४ ॥
चिन्तयित्वेति साचालीद्वाला कुल्माषशूर्पभृत् । एकमंघ्रिं न्यधादन्तर्देहल्या अपरं बहिः ॥ ५७५ ॥
निगडैर्देहलीं सा तु समुल्लंघितुमक्षमा । तत्रस्थैवार्द्रया भक्त्या भगवन्तमभाषत ॥ ५७६ ॥
स्वामिन्ननुचितं भोज्यं यद्यप्येतत्तथापि हि । परोपकारैकरत गृहाणानुगृहाण माम् ॥ ५७७ ॥
द्रव्यादिभेदसंशुद्धं ज्ञात्वा पूर्णमभिग्रहम् । तस्यै कुल्माषभिक्षायै स्वामी प्रासारयत् करम् ॥ ५७८ ॥
अहो धन्याहमेवेति ध्यायन्ती चन्दनापि हि । चिक्षेप शूर्पकोणेन कुल्माषान् स्वामिनः करे ॥ ५७९ ॥
स्वाम्यभिग्रहसंपूर्त्या प्रीतास्तत्राययुः सुराः । वसुधाराप्रभृतीनि पञ्च दिव्यानि च व्यधुः ॥ ५८० ॥
तुत्रुटुर्निगडास्तस्यास्तत्पदे कांचनानि च । जज्ञिरे नूपुराण्यासीत् केशपाशश्च पूर्ववत् ॥ ५८१ ॥
सर्वांगीणं च तत्कालं रत्नालंकारधारिणी । श्रीवीरभक्तैर्विदधे विबुधैरथ चन्दना ॥ ५८२ ॥
उत्कृष्टनादं विदधू रोदःकुक्षिंभरिः सुराः । जगुश्च ननृतुश्चोच्चै रंगाचार्या इवोन्मुदः ॥ ५८३ ॥
मृगावतीशतानीकौ सुगुप्तो नन्दया सह । तत्रैयुः सपरीवाराः श्रुत्वा तं दुन्दुभिध्वनिम् ॥ ५८४ ॥
आययौ देवराजोऽपि शक्रो मुदितमानसः । संपूर्णाभिग्रहं नाथं नमस्कर्तुं द्रुतद्रुतम् ॥ ५८५ ॥
दधिवाहनराजस्य संपुलो नाम कंचुकी । चंपावस्कन्द आनीतो राज्ञा मुक्तस्तदैव हि ॥ ५८६ ॥
तत्रायातो वसुमतीं दृष्ट्वा तत्पादयोर्नतः । विमुक्तकंठमरुदत् सद्यस्तामपि रोदयन् ॥ ५८७ ॥

१ देवैः । २ नाट्याचार्याः । ३ अधिकहर्षाः । ४ चंपानगरीलुंटने ।

किं रोदिषीति राज्ञोक्तः साश्रु प्रोवाच कंचुकी । दधिवाहनराजस्य धारिण्याश्चेयमात्मजा ॥ ५८८ ॥
ताहग्विभवविभ्रष्टा पितृभ्यां रहिता च हा । इयं वसत्यन्यगृहे दासीवत्तेन रोदिमि ॥ ५८९ ॥
राजाप्यूचे न शोच्येयं संपूर्णाभिग्रहो यया । जगत्रयत्राणवीरः श्रीवीरः प्रतिलाभितः ॥ ५९० ॥
मृगावत्यप्यभाषिष्ट धारिणी भगिनी मम । इयं तद्दुहिता बाला ममापि दुहिता खलु ॥ ५९१ ॥
पंचाहन्यूनषण्मासीतपः पर्यन्तपारणम् । कृत्वा धनावहगृहान्निर्ययौ भगवानपि ॥ ५९२ ॥
वसुधारामथादित्सुं लोभप्राबल्यतो नृपम् । व्याजहार शतानीकं सौधर्माधिपतिः स्वयम् ॥ ५९३ ॥
नेह स्वस्वामिभावो यद्वसुवृष्टिं जिघृक्षसि[1] । यस्मै ददाति कन्येयं स एव लभते नृप ॥ ५९४ ॥
गृह्णात्विमां क इत्युक्ता राज्ञा प्रोवाच चन्दना । अयं धनावहः श्रेष्ठी पिता हि मम पालनात् ॥ ५९५ ॥
जग्राह वसुधारां तां ततः श्रेष्ठी धनावहः । भूयोऽप्याखंडलोऽवोचच्छतानीकनरेश्वरम् ॥ ५९६ ॥
बाला चरमदेहेयं भोगतृष्णापराङ्मुखी । भविष्यत्यादिमा शिष्योत्पन्ने वीरस्य केवले ॥ ५९७ ॥
आस्वामिकेवलोत्पत्ति[2] रक्षणीया त्वया ह्यसौ । इत्युक्त्वा मघवा नाथं नत्वा च त्रिदिवं ययौ ॥ ५९८ ॥
कन्यकान्तःपुरे निन्ये शतानीकेन चन्दना । सा स्वामिकेवलोत्पत्तिं तत्र ध्यायन्त्यवास्थित ॥ ५९९ ॥
अनर्थमूलं मूला च श्रेष्ठिना निरवास्यत । अपध्यानवती साथ विपद्य नरकं ययौ ॥ ६०० ॥
नाथोऽपि विहरन् प्राप ग्रामं नाम्ना सुमंगलम् । तस्मिन् सनत्कुमारेन्द्रेणाभ्युपेत्याभ्यवन्द्यत ॥ ६०१ ॥
ततो जगाम भगवान् सत्क्षेत्रे सन्निवेशने । तस्मिन्माहेन्द्रकल्पेन्द्रेणैत्य भक्त्यानमस्यत ॥ ६०२ ॥

---

१ ग्रहीतुमिच्छसि । २ स्वामिनः केवलोत्पत्तिं मर्यादीकृत्य ।

नाथोऽथ पालकग्रामे ययौ तत्र त्वदृश्यत । वणिजा भायलाख्येन यात्रायै चलता सता ॥ ६०३ ॥
असावशकुनं भिक्षुः क्षिपाम्यस्यैव मूर्धनि । इति हन्तुं प्रभुं पापः स कृष्टासिमधावत ॥ ६०४ ॥
सिद्धार्थव्यन्तरस्तस्य स्वयमेवाच्छिदच्छिदः । स्वामी च विहरन् प्राप चंपां नाम महापुरीम् ॥ ६०५ ॥
तत्राग्निहोत्रशालायां स्वातिदत्तद्विजन्मनः । तस्थौ वर्षाचतुर्मासीं द्वादशीं स्वाम्युपोषितः ॥ ६०६ ॥
पूर्णभद्रमाणिभद्रौ यक्षौ तत्र महर्द्धिकौ । रात्रौ रात्रौ समभ्येत्य पर्यपूजयतां प्रभुम् ॥ ६०७ ॥
स्वातिदत्तोऽचिन्तयच्च किमसौ वेत्ति किंचन । देवार्यो यदमुं देवाः पूजयन्ति प्रतिक्षपम् ॥ ६०८ ॥
एवं विचिन्त्य जिज्ञासुरेत्य पप्रछ स प्रभुम् । देहे शिरःप्रभृत्यंगपूर्णे जीवः क उच्यते ॥ ६०९ ॥
स्वाम्यपि व्याहरज्जीवः स योऽहमिति मन्यते । स्वातिदत्तोऽप्युवाचैवं सोऽपि कश्छिन्धि संशयम् ॥ ६१० ॥
भगवान् श्रीमहावीरः प्रत्यभाषिष्ट भो द्विज । शिरःकरप्रभृतिभ्यो विभिन्नः स हि सूक्ष्मकः ॥ ६११ ॥
स्वातिदत्तद्विजोऽप्यूचे ब्रूहि सूक्ष्मोऽपि को नु सः । व्याजहार प्रभुरपि न गृह्येत य इन्द्रियैः ॥ ६१२ ॥
प्रश्नेनानेन विप्रः स ज्ञात्वा तत्त्वविदं प्रभुम् । भक्त्यानर्च प्रभुणापि स भव्य इति बोधितः ॥ ६१३ ॥
चतुर्मास्यत्यये स्वामी जृंभकग्राममाययौ । तत्र नाट्यविधिं शक्रो दर्शयित्वाब्रवीदिति ॥ ६१४ ॥
जगद्गुरो कतिपयैरद्य प्रभृति वासरैः । उत्पत्स्यतेऽत्रभवतः केवलज्ञानमुज्ज्वलम् ॥ ६१५ ॥
इत्युदित्वा सुनासीरो वीरं नत्वा दिवं ययौ । श्रीवीरोऽप्यगमद्ग्रामे मेंढकग्रामनामनि ॥ ६१६ ॥
चमरेन्द्रस्तत्र चैत्य भगवन्तमवन्दत । पृष्ट्वा सुखविहारं च जगाम भवनं निजम् ॥ ६१७ ॥

१ प्रतिरात्रि । २ इन्द्रः ।

ग्रामं षण्मानिनामानं जगाम भगवानपि । बहिश्च कायोत्सर्गेण तस्थौ ध्यानपरायणः ॥ ६१८ ॥
वेद्यं कर्म तदोदीर्णं प्रभोर्विष्णुभवार्जितम् । शय्यापालश्रवः[1]क्षिप्ततप्तत्रपुनिबन्धनम् ॥ ६१९ ॥
शय्यापालस्य जीवोऽपि गोपालस्तत्र सोऽभवत् । स्वाम्यन्तिके वृषान्मुक्त्वा गोदोहादिकृते ययौ ॥६२०॥
चरन्तः स्वेच्छया ते च प्राविशन्नटवीं वृषाः । क्षणात्सोऽप्याययौ गोपोऽपश्यन्नुक्षणो[2]ऽवदत्प्रभुम् ॥६२१॥
देवार्य क्व ममोक्षाणः किं न ब्रूषे मुनिब्रुव[3] । न शृणोषि वचः किं वा कर्णरंध्रे वृथैव तत् ॥ ६२२ ॥
अवादिनि प्रभावेवमत्यन्तकुपितोऽथ सः । अक्षिपत्काशशलाके स्वामिनः कर्णरंध्रयोः ॥ ६२३ ॥
शलाके ताडिते तेन तथा ते मिलिते मिथः । अखंडैकशलाकत्वं बिभरांचक्रतुर्यथा ॥ ६२४ ॥
मा कृष्यत् कीलिकावेतौ कोऽपीति स्वधिया कुधीः । तत्कीलकबहिर्भागं छित्वा गोपालको ययौ ॥६२५॥
प्रणष्टमायामिथ्यादिशल्योऽपि श्रुतिशल्यभाग्[4] । अकंपितः शुभध्यानादपापां मध्यमां ययौ ॥ ६२६ ॥
पारणार्थं प्रभुस्तत्र सिद्धार्थवणिजो गृहे । जगाम भगवांस्तेन भक्त्या च प्रतिलाभितः ॥ ६२७ ॥
पूर्वायातस्तत्र वैद्यः सिद्धार्थस्य सुहृत्प्रियः । खरकाख्यः प्रभुं प्रेक्ष्य सूक्ष्मधीरब्रवीदिदम् ॥ ६२८ ॥
अहो भगवतो मूर्तिः संपूर्णा सर्वलक्षणैः । परं शल्यवती चेयं म्लानत्वेनोपलक्ष्यते ॥ ६२९ ॥
सिद्धार्थः संभ्रमादूचे यद्येवं तन्निरूपय । सम्यग्भगवतो देहे क्व शल्यं हन्त तिष्ठति ॥ ६३० ॥
वैद्योऽपि निपुणं पश्यन्नखिलं स्वामिनो वपुः । ददर्श कर्णयोः कीलौ सिद्धार्थस्याप्यदर्शयत् ॥ ६३१ ॥
सिद्धार्थोऽथावदत् केनाप्यपवादादभीरुणा । नरकादप्यभीतेन चक्रेऽदः कर्म दारुणम् ॥ ६३२ ॥

१ श्रवः कर्णः । २ वृषान् । ३ कुत्सितमुने । ४ श्रुत्योः कर्णयोः शल्यभाक् ।

कृतं वा तस्य पापस्य कथयाप्यनया सखे। नाथस्य शल्योद्धाराय प्रयतस्व महामते ॥ ६३३ ॥
स्वामिनः कर्णयोः शल्ये पीडा तु महती मम। विलंबं न सहेऽत्रार्थे सर्वस्वमपि यातु मे ॥ ६३४ ॥
कर्णाभ्यां विश्वनाथस्योद्धृतयोरिह शल्ययोः। मन्ये भवमहांभोधेरावामेव समुद्धृतौ ॥ ६३५ ॥
वैद्योऽप्युवाच नाथोऽयं विश्वत्राणक्षयक्षमः। कर्मक्षयायोपैक्षिष्ट [1]तं नाशक्त्यापकारिणम् ॥ ६३६ ॥
कथं चिकित्सनीयोऽयं निरपेक्षो वपुष्यपि। यः कर्मनिर्जरालुब्धो वेदनां साधु मन्यते ॥ ६३७ ॥
सिद्धार्थोऽप्यवदत् केयं वाचोयुक्तिस्तवाधुना। न कालो वचसामेषां चिकित्स्यो भगवान् खलु ॥६३८॥
तयोर्ब्रुवाणयोरेवं निरपेक्षः प्रभुर्ययौ। तस्थौ च बहिरुद्याने शुभध्यानपरायणः ॥ ६३९ ॥
सिद्धार्थखरकौ तौ च गृहीत्वा भेषजादिकम्। तत्रोद्याने [2]त्वरावन्तौ भगवन्तमुपेयतुः ॥ ६४० ॥
तैलद्रोण्यां विनिवेश्य [3]तैलेनाभ्यज्य च प्रभुम्। संवाहकैर्बलीयोभिस्तावमर्दयतामथ ॥ ६४१ ॥
श्लथेषु मर्दनात्संधिष्वो[4]जस्विपुरुषैः प्रभोः। सं[5]दंशाभ्यामकृष्येतां युगपत्कर्णकीलकौ ॥ ६४२ ॥
कीलद्वयं सरुधिरं निर्ययौ कर्णरन्ध्रयोः। अवशिष्टं वेदनीयं कर्म साक्षादिव प्रभोः ॥ ६४३ ॥
तथाभूद्वेदना कीलकर्षणेन यथा प्रभुः। ररास भै[6]रवारावं वज्राहत इवाचलः ॥ ६४४ ॥
नास्फुटत् स्वामिमाहात्म्यात्तेन नादेन मेदिनी। विपद्यपि हि नार्हन्तः परोपद्रवकारिणः ॥ ६४५ ॥
संरोहिण्या रोहयित्वा कर्णौ नाथं प्रणम्य च। क्षमयित्वा च सिद्धार्थखरकौ गृहमीयतुः ॥ ६४६ ॥

---

१ तमपकारिणं कर्मक्षयाय उपैक्षिष्ट न त्वशक्त्या इत्यन्वयः। २ वेगवन्तौ। ३ अभ्यंगं कृत्वा। ४ बलवत्पुरुषैः। ५ संदंशः उपकरणविशेषः. ' साणसा ' इति भाषायां। ६ भयंकरशब्दं यथा तथा।

वेदनामपि तौ भर्तुः कृतवन्तौ शुभाशयौ । बभूवतुः सुरलोकश्रीभाजनमुभावपि ॥ ६४७ ॥
दुष्टाशयस्तु गोपालो विधाय स्वामिवेदनाम् । सप्तमावनिदुःखानां भाजनं समजायत ॥ ६४८ ॥
स्वामिनो भैरवारावान्महाभैरवमित्यभूत् । तदुद्यानं तत्र देवकुलं च विदधे जनैः ॥ ६४९ ॥
एवं श्रीवीरनाथस्योपसर्गेष्वखिलेष्वपि । जघन्येषूत्कृष्टं कटपूतनाशीतमुत्कटम् ॥ ६५० ॥
कालचक्रं मध्यमेषूत्कृष्टेषूद्धरणं त्विदम् । गोपारब्धा उपसर्गा गोपेनैव च निष्ठिताः ॥ ६५१ ॥ युग्मम् ॥
चतुर्मासक्षपणानि नव द्विमासिकानि षट् । मासिकानि द्वादशार्धमासिकानि द्विसप्ततिः ॥ ६५२ ॥
एकं षाण्मासिकं द्वे त्रिमासे द्वे सार्धमासिके । सार्धद्विमासिके द्वे च भद्रादिप्रतिमात्रयम् ॥ ६५३ ॥
महानगर्यां कौशांब्यामभिग्रहसमन्वितम् । अहोभिः पंचभिर्न्यूनमेकं षाण्मासिकं तथा ॥ ६५४ ॥
प्रतिमाश्चैकरात्रिक्यो द्वादशाष्टमभक्ततः । चरमायां विभावर्यां कायोत्सर्गसमन्विताः ॥ ६५५ ॥
एकोनत्रिंशदधिके द्वे च षष्ठशते प्रभोः । नित्यभक्तं चतुर्थं च बभूव न कदाचन ॥ ६५६ ॥
प्रभोरेकोनपंचाशं पारणाहशतत्रयम् । व्रताहाच्चेत्यभूत् सार्धा द्वादशाब्दी सपक्षिका ॥ ६५७ ॥

कृत्वा तपो जलविहीनमशेषमित्थं छद्मस्थ एव विहरन् विजितोपसर्गः ।
स्वामी जगाम ऋजुपालिकया महत्या नद्या सनाथमथ जृंभकसन्निवेशम् ॥ ६५८ ॥

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये दशमे पर्वणि श्रीमहावीरद्वितीयसाग्रषड्वार्षिकछद्मस्थविहारवर्णनो नाम चतुर्थः सर्गः ॥

१ सप्तमीनरकभूमिदुःखानाम् । २ पर्यवसिताः ।

## ॥ पंचमः सर्गः ॥

जगन्नाथोऽथ तत्रर्जुपालिकोत्तररोधसि । श्यामाकनाम्नो गृहिणः क्षेत्रे शालतरोस्तले ॥ १ ॥
अव्यक्तचैत्यस्यासन्ने षष्ठेनोत्कटिकासनी । मुहूर्ते विजये स्वामी तस्थावातापनापरः ॥ २ ॥
॥ युग्मम् ॥

शुक्लध्यानान्तरस्थस्य क्षपकश्रेणिवर्तिनः । स्वामिनो घातिकर्माणि तुत्रुटुर्जीर्णरज्जुवत् ॥ ३ ॥
वैशाखश्वेतदशम्यां चन्द्रे हस्तोत्तरागते । यामे चतुर्थेऽह्नो भर्तुरुदपद्यत केवलम् ॥ ४ ॥
विज्ञायासनकंपेन केवलज्ञानमीशितुः । इन्द्राः सह सुरैस्तत्र समाजग्मुः प्रमोदिनः ॥ ५ ॥
केऽप्युत्पेतुः केऽपि पेतुर्ननृतुः केऽपि केऽपि च । जहसुः केऽपि च जगुर्बूचक्रुः केऽपि सिंहवत् ॥ ६ ॥
केऽप्यश्ववदहेषन्त वबृंहुः केऽपि हस्तिवत् । रथवत् केऽपि चीच्चक्रुः फूच्चक्रुः केऽपि नागवत् ॥ ७ ॥
स्वामिनः केवलोत्पत्त्या हृष्टात्मानोऽपरेऽपि हि । चतुर्विधा दिविषदो विविधं विचिचेष्टिरे ॥ ८ ॥
प्रतिवप्रं चतुर्द्वारं वप्रत्रितयभूषितम् । चक्रुः समवसरणं यथाविधि दिवौकसः ॥ ९ ॥
न सर्वविरतेरर्हः कोऽप्यत्रेति विदन्नपि । कल्प इत्यकरोत्तत्र निषण्णो देशनां विभुः ॥ १० ॥
तत्तीर्थजन्मा मातंगो यक्षः करिरथोऽसितः । बीजपूरं भुजे वामे दक्षिणे नकुलं दधत् ॥ ११ ॥

---

१ उत्कटिकं च तदासनं च तदस्यास्तीति तथा.

सिद्धायिका तथोत्पन्ना सिंहयाना हरिच्छविः[1] । समातुलिंगवल्लक्यौ वामबाहू च बिभ्रती ॥ १२ ॥
पुस्तकाभयदौ चोभौ दधाना दक्षिणौ भुजौ । अभूतां ते प्रभोर्नित्यासन्ने शासनदेवते ॥ १३ ॥

॥ त्रिभिर्विशेषकम् ॥

उपकारार्हलोकानामभावात्तत्र च प्रभुः । परोपकारैकपरः प्रक्षीणप्रेमबन्धनः[2] ॥ १४ ॥
तीर्थकृन्नामगोत्राख्यं कर्म वेद्यं महन्मया । भव्यजन्तुप्रबोधेनानुभाव्यमिति भावयन् ॥ १५ ॥
द्युसन्निकायकोटीभिरसंख्याताभिरावृतः । सुरैः संचार्यमाणेषु स्वर्णाब्जेषु दधत्क्रमौ ॥ १६ ॥
स्फुटे मार्गे दिन इव देवोद्योतेन निश्यपि । द्वादशयोजनाध्वानां भव्यसत्वैरलंकृताम् ॥ १७ ॥
गौतमाद्यैः प्रबोधार्हैर्भूरिशिष्यसमावृतैः । यज्ञाय मिलितैर्जुष्टामपापामगमत्पुरीम् ॥ १८ ॥

॥ पंचभिः कुलकम् ॥

तस्या अदूरे पुर्याश्च महासेनवनाभिधे । उद्याने चारुसमवसरणं विबुधा व्यधुः ॥ १९ ॥
सञ्जातसर्वातिशयः स्तूयमानः सुरासुरैः । पूर्वद्वारेण समवसरणं प्राविशत्प्रभुः ॥ २० ॥
द्वात्रिंशद्धनुरुत्तुंगं रत्नछंदकविनिभम् । ततः प्रदक्षिणीचक्रे चैत्यवृक्षं जगद्गुरुः ॥ २१ ॥
नमस्तीर्थायेत्युदित्वा पालयन्नार्हतीं स्थितिम् । सपादपीठे न्यषदत्पूर्वसिंहासने प्रभुः ॥ २२ ॥
स्वामिनः प्रतिरूपाणि तन्महिम्नैव नाकिनः । विचक्रिरे भक्तिमन्तस्तिसृष्वन्यासु दिक्ष्वपि ॥ २३ ॥
यथाद्वारं प्रविश्याथ यथास्थित्यवतस्थिरे । पश्यन्तः स्वामिवदनं सर्वे सुरनरादयः ॥ २४ ॥

१ हरिततृणस्येव च्छविः कान्तिर्यस्याः सा । २ प्रकर्षेण क्षीणं रागबन्धन यस्य सः ।

नमस्कृत्य जगन्नाथं द्युसन्नाथः कृताञ्जलिः । रोमाञ्चितवपुर्भक्त्या स्तोतुमेवं प्रचक्रमे ॥ २५ ॥
लावण्यपुण्यवपुषि त्वयि नेत्रामृतांजने । माध्यस्थ्यमपि दौस्थ्याय किं पुनर्द्वेषविप्लवः ॥ २६ ॥
तवापि प्रतिपक्षोऽस्ति सोऽपि कोपादिविप्लुतः । अनया किंवदन्त्यापि किं जीवन्ति विवेकिनः ॥ २७ ॥
विपक्षस्ते विरक्तश्चेत् स त्वमेवाथ रागवान् । न विपक्षो विपक्षः किं खद्योतो द्युतिमालिनः ॥ २८ ॥
स्पृहयन्ति त्वद्योगाय यत्तेऽपि लवसत्तमाः । योगमुद्रादरिद्राणां परेषां तत्कथैव का ॥ २९ ॥
त्वां प्रपद्यामहे नाथं त्वां स्तुमस्त्वामुपास्महे । त्वत्तो हि न परस्त्राता किं ब्रूमः किन्तु कुर्महे ॥ ३० ॥
स्वयं मलीमसाचारैः प्रतारणपरैः परैः । वंच्यते जगदप्येतत् कस्य पूत्कुर्महे पुरः ॥ ३१ ॥
नित्यमुक्ताञ्जगज्जन्मस्थेमक्षयकृतोद्यमान् । वन्ध्यास्तनन्धयप्रायान् को देवांश्चेतनः श्रयेत् ॥ ३२ ॥
कृतार्थां जठरोपस्थदुःस्थितैरपि दैवतैः । भवादृशान्निह्नुवते हहा देवास्तिकाः परे ॥ ३३ ॥
खपुष्पप्रायमुत्प्रेक्ष्य किंचिन्मानं प्रकल्प्य च । संमान्ति देहे गेहे वा न गेहेनर्दिनः परे ॥ ३४ ॥
कामरागस्नेहरागावीषत्करनिवारणौ । दृष्टिरागस्तु पापीयान् दुरुच्छेदः सतामपि ॥ ३५ ॥
प्रसन्नमास्यं मध्यस्थे दृशौ लोकंपृणं वचः । इति प्रीतिपदे बाढं मूढास्त्वय्यप्युदासते ॥ ३६ ॥
तिष्ठेद्वायुर्द्रवेदद्रिर्ज्वलेज्जलमपि क्वचित् । तथापि ग्रस्तो रागाद्यैर्नाप्तो भवितुमर्हति ॥ ३७ ॥

१ द्वेषोपद्रवः । २ स प्रतिपक्षोऽपि कोपादिनोपद्रुतः इत्थंभूतया किंवदन्त्या । ३ अथ चेत् ते विपक्षो रागवांस्तर्हि स विपक्ष एव न भवति यतः सूर्यस्य विपक्षः किं खद्योतो भवतीति योजना । ४ अनुत्तरवासिनः । ५ स्थेम स्थितिः । ६ जठरोपस्थाभ्यामुदरपोषणविषयाभ्यां दुःस्थितैः देवैः कृतार्थाः सन्तः । ७ गृहे गर्जन्तः । ८ लोकं पृणाति प्रीणयतीति लोकपृणम् ।

इत्यभिष्टुत्य विरते विडौजसि जगद्गुरुः । सर्वभाषाजुषा वाचा विदधे देशनामिति ॥ ३८ ॥
अहो अपारः संसारः सरस्वानिव दारुणः । कारणं तस्य कर्मैव हन्त बीजं तरोरिव ॥ ३९ ॥
कर्मणा स्वकृतेनैव विवेकपरिवर्जितः । कूपकार इवाधस्तादृतिमाप्नोति देहभृत् ॥ ४० ॥
अप्यूर्ध्वगतिमाप्नोति निजेनैव हि कर्मणा । प्रासादकारक इव शरीरी विषदाशयः ॥ ४१ ॥
प्राणातिपातं नो कुर्यात् कर्मबन्धनिबन्धनम् । स्वप्राणवत् परप्राणपरित्राणपरो भवेत् ॥ ४२ ॥
न मृषा जातु भाषेत किं तु भाषेत सूनृतम् । परपीडां परिहरन्नात्मपीडामिवांगवान् ॥ ४३ ॥
अदत्तं नाददीतार्थं बाह्यप्राणोपमं नृणाम् । अर्थं हि हरता तेषां वध एव कृतो भवेत् ॥ ४४ ॥
मैथुनं न विदध्याच्च बहुजीवोपमर्दकम् । ब्रह्मैव कुर्यात्तत्प्राज्ञः परब्रह्मनिबन्धनम् ॥ ४५ ॥
परिग्रहं न कुर्याच्च परिग्रहवशेन हि । गौरिवाधिकभारेण विधुरो निपतत्यधः ॥ ४६ ॥
एतान्प्राणातिपातादीन् सूक्ष्मांस्त्यक्तुं न चेत्क्षमाः । त्यजेयुर्बादरांस्तर्हि सूक्ष्मत्यागेऽनुरागिणः ॥ ४७ ॥
इत्थं च देशनां भर्तुः शृण्वन्तोऽवहिता जनाः । तस्थुरानन्दनिस्यन्दा आलेख्यलिखिता इव ॥ ४८ ॥
इतश्च मगधे देशे गोबरग्रामनामनि । ग्रामे गौतमगोत्रोऽभूद्वसुभूतिरिति द्विजः ॥ ४९ ॥
तस्येन्द्रभूत्यग्निभूतिवायुभूत्यभिधाः सुताः । पत्न्यां पृथिव्यामभवंस्तेऽपि गोत्रेण गौतमाः ॥ ५० ॥
कोल्लाकेऽभूद्धनुर्मित्रो धम्मिल्लश्च द्विजस्तयोः । पुत्रौ व्यक्तः सुधर्मा च वारुणीभद्रिलाभवौ ॥ ५१ ॥
धनदेवश्च मौर्यश्च मौर्याख्ये सन्निवेशने । द्वावभूतां द्विजन्मानौ मातृष्वस्रेयकौ मिथः ॥ ५२ ॥

---

१ सागर इव । २ यथा कूपखनकः पृथ्वीं खनन्नधोऽधो याति तद्वत् । ३ मोक्षकारणम् ।

पत्यां विजयदेवायां धनदेवस्य नन्दनः । मंडकोऽभूत्तत्र जाते धनदेवो व्यपद्यत ॥ ५३ ॥
लोकाचारो ह्यसौ तत्रेत्यभार्यो मौर्यकोऽकरोत् । भार्यां विजयदेवां तां देशाचारो हि न ह्रिये ॥ ५४ ॥
क्रमाद्विजयदेवायां मौर्यस्य तनयोऽभवत् । स च लोके मौर्यपुत्र इति नाम्नैव पप्रथे ॥ ५५ ॥
तथैव विमलापुर्यां[1] देवनाम्नो द्विजन्मनः । अभूदकंपितो नाम जयन्तीकुक्षिजः सुतः ॥ ५६ ॥
अभूच्च कोशलापुर्यां वसुनाम्नो द्विजन्मनः । सूनुर्नाम्नाचलभ्राता नन्दाकुक्षिसमुद्भवः ॥ ५७ ॥
वत्सदेशे तुंगिकाख्ये सन्निवेशे द्विजन्मनः । दत्तस्य सूनुर्मेतार्यो करुणाकुक्षिभूरभूत् ॥ ५८ ॥
तथा पुरे राजगृहे वलनाम्नो द्विजन्मनः । प्रभासो नाम पुत्रोऽभूदतिभद्रोदरोद्भवः ॥ ५९ ॥
एकादशापि तेऽभूवंश्चतुर्वेदाब्धिपारगाः । गौतमाद्या उपाध्यायाः पृथक् शिष्यशतैर्वृताः ॥ ६० ॥
विप्रः पुर्यामपापायां यष्टुकामोऽथ सोमिलः । आनिनाय श्रद्धया तान् यज्ञकर्मविचक्षणान् ॥ ६१ ॥
तदा च तत्र समवसृतं वीरं विवन्दिषून् । सुरानापततः[2] प्रेक्ष्य बभाषे गौतमो द्विजान् ॥ ६२ ॥
मंत्रेणास्माभिराहूताः प्रत्यक्षा नन्वमी सुराः । इह यज्ञे समायान्ति प्रभावं पश्यत क्रतोः ॥ ६३ ॥
त्यक्त्वा चंडालवेश्मेव यज्ञवाटं सुरेषु तु । प्रति समवसरणं यांत्सु[3] लोकोऽब्रवीदिति ॥ ६४ ॥
उद्याने समवसृतः सर्वज्ञोऽतिशयान्वितः । तं वन्दितुं सुरा यान्ति पौराश्चामी प्रमोदितः ॥ ६५ ॥
सर्वज्ञ इत्यक्षराणि श्रुत्वाक्रोशमिवोच्चकैः । इन्द्रभूतिः प्रकुपितः स्वानेवमवदज्जनान् ॥ ६६ ॥
मां त्यक्त्वा धिगमी यान्ति पाखंडिनममुं जनाः । त्यक्त्वा चूतमिवाविज्ञाः[4] करीरं मरुमानुषाः ॥ ६७ ॥

१ मिथिलापुर्यामिति पाठः प्रत्यन्तरे. । २ आगच्छतः । ३ गच्छत्सु सत्सु । ४ आम्रम् ।

आद्यं गणधरं ज्ञात्वा भाविनं तं जगद्गुरुः । स्वयं प्रव्राजयामास पञ्चशिष्यशतीयुतम् ॥ ८३ ॥
उपनीतं कुबेरेण धर्मोपकरणं ततः । त्यक्तसंगोऽप्याददानो गौतमोऽथेत्यचिन्तयत् ॥ ८४ ॥
निरवद्यव्रतत्राणे[1] यदेतदुपयुज्यते । वस्त्रपात्रादिकं ग्राह्यं धर्मोपकरणं हि तत् ॥ ८५ ॥
छद्मस्थैरिह षड्जीवनिकाययतनापरैः । सम्यक् प्राणिदया कर्तुं शक्येत कथमन्यथा ॥ ८६ ॥
यद्बुद्गमोत्पादैषणाभिर्गुणसंयुतम् । गृहीतं तदहिंसायै तद्धि ग्राह्यं विवेकिनः[2] ॥ ८७ ॥
ज्ञानदर्शनचारित्राचारशक्तिसमन्वितः । आद्यन्तमध्येष्वमूढसमयार्थं[3] हि साधयेत् ॥ ८८ ॥
ज्ञानावलोकहीनो यस्त्वभिमानधनः पुमान् । अस्मिन् परिग्रहाशंकां कुरुते स हि हिंसकः ॥ ८९ ॥
परिग्रहधियं धत्ते धर्मोपकरणेऽपि यः । बालानविदिततत्त्वान् स रञ्जयितुमिच्छति ॥ ९० ॥
जलज्वलनवायूर्वीतरुत्रसतया बहून् । जीवांस्त्रातुं कथमलं धर्मोपकरणं विना ॥ ९१ ॥
गृहीतोपकरणोऽपि करणत्रयदूषितः[4] । असंतुष्टः स आत्मानं प्रतारयति केवलम् ॥ ९२ ॥
इन्द्रभूतिर्विभाव्यैवं शिष्याणां पञ्चभिः शतैः । समं जग्राह धर्मोपकरणं त्रिदशार्पितम् ॥ ९३ ॥
तं च श्रुत्वा प्रव्रजितमग्निभूतिरचिन्तयत् । तेनेन्द्रजालिकेनेन्द्रभूतिर्नूनं प्रतारितः ॥ ९४ ॥
गत्वा जयाम्यसर्वज्ञमपि सर्वज्ञमानिनम् । आनयामि भ्रातरं स्वं माययैव पराजितम् ॥ ९५ ॥
सर्वशास्त्ररहस्यज्ञमिन्द्रभूतिं महामतिम् । कोऽलं जेतुं विना मायां माया जैत्री[5] त्वमायिषु ॥ ९६ ॥
स चेन्मे संशयं ज्ञाता छेत्ता च हृदयस्थितम् । तदाहमपि तच्छिष्यः सशिष्योऽपीन्द्रभूतिवत् ॥ ९७ ॥

१ निर्दोषव्रतस्य रक्षणे । २ कर्तरि षष्ठी । ३ निर्मलसूत्रार्थम् । ४ करणत्रयेण मनोवचनकायरूपेण दूषितः । ५ जयनशीला ।

अग्निभूतिर्विमृश्यैवं पञ्चशिष्यशतावृतः । ययौ समवसरणे तस्थौ चोपजिनेश्वरम् ॥ ९८ ॥
तमालपत्रप्रभुर्विप्राग्निभूते गौतमान्वय । अस्ति वा नास्ति किं कर्मेत्येष ते संशयो हृदि ॥ ९९ ॥
प्रत्यक्षादिप्रमाणानामगम्यं कर्म मूर्तिमत् । कथंकारं स बध्नीयाज्जीवो मूर्तत्ववर्जितः ॥ १०० ॥
उपघातानुग्रहाश्च कथं मूर्त्तेन कर्मणा । जीवस्य स्युरमूर्त्तस्येत्याशंका हि मुधैव ते ॥ १०१ ॥
प्रत्यक्षं कर्मातिशयज्ञानिनां त्वादृशां पुनः । अनुमानाद्धिगम्यं तज्जीववैचित्र्यदर्शनात् ॥ १०२ ॥
कर्मणामेव वैचित्र्याद्भवन्ति च शरीरिणाम् । सुखदुःखादयो भावास्तत्कर्मास्तीति निश्चिनु ॥ १०३ ॥
तथाहि स्युर्नृपाः केऽपि हस्त्यश्वरथवाहनाः । केचित्तत्र भवे पादचारिणो निरुपानहः ॥ १०४ ॥
सहस्रकुक्षिंभरयो भवन्त्येके महर्द्धयः । भिक्षया स्वोदरमपि पूरयन्त्यपरे पुनः ॥ १०५ ॥
देशकालादितुल्यत्वेऽप्येकस्य व्यवहारिणः । भूयिष्ठो जायते लाभो मूलनाशोऽपरस्य तु ॥ १०६ ॥
एवंविधानां कार्याणां ज्ञेयं कर्मैव कारणम् । न विना कारणं कार्यवैचित्र्यमुपजायते ॥ १०७ ॥
मूर्तानां कर्मणां जीवेनामूर्तेन च संगमः । समीचीनः सोऽपि नूनमाकाशघटयोरिव ॥ १०८ ॥
उपघातानुग्रहाश्च नानाविधसुरौषधैः[1] । अमूर्तेऽपि भवन्तीति निरवद्यमदोऽपि हि ॥ १०९ ॥
एवं च स्वामिना छिन्नसंशयस्त्यक्तमत्सरः । अग्निभूतिः प्रवव्राज शिष्यपञ्चशतीयुतः ॥ ११० ॥
तस्मिन्नपि प्रव्रजिते वायुभूतिर्व्यचिन्तयत् । जितौ मे भ्रातरौ येन सर्वज्ञः खल्वयं ततः ॥ १११ ॥
तदेतस्य भगवतोऽभ्यर्हणा[2]वन्दनादिभिः । धौत[3]कल्मषकालुष्यः स्यां छिनद्मि च संशयम् ॥ ११२ ॥

१ सुरा मदिरा । २ अभ्यर्हणा पूजा । ३ धौतं कल्मषं पापमज्ञानं वा तदेव कालुष्य येन सः ।

एवं विचिन्त्य सोऽप्यागात् स्वामिनं प्रणनाम च । स्वाम्यप्युवाच जीवः स तद्पुश्चेति ते च्रमः ॥११३॥
प्रत्यक्षाद्यग्रहणेन जीवो जिन्नस्तनोर्न हि । जलबुद्बुदवत्सोऽङ्के मूर्छतीति तवाशयः ॥ ११४ ॥
मिथ्या तद्देशप्रत्यक्षो जीवः सर्वशरीरिणाम् । तद्गुणानामीहादीनां प्रत्यक्षत्वात्स्वसंविदा ॥ ११५ ॥
देहेन्द्रियादिरिक्तः स इन्द्रियापगमेऽपि यत् । इन्द्रियार्थान् संस्मरति मरणं च प्रपद्यते ॥ ११६ ॥
इति स्वामिगिरा छिन्नसंशयो विमुखो जवात् । पर्यव्राजीद्वायुजूतिः शिष्यपञ्चशतीयुतः ॥ ११७ ॥
व्यक्तोऽप्यचिन्तयद्व्यक्तं सर्वज्ञो जगवानयम् । इन्द्रजूत्यादयो येन जिता वेदा इव त्रयः ॥ ११८ ॥
ममापि संशयं छेत्ता निश्चितं जगवानयम् । ततः शिष्यीजविष्यामि ध्यात्वैवं सोऽप्यगात्प्रजुम् ॥११९॥
॥ युग्मम् ॥

तमप्युवाच जगवान् जो व्यक्त तव चेतसि । न हि जूतानि विद्यन्ते पृथ्व्यादीनीति संशयः ॥ १२० ॥
तेषां तु प्रतिपत्तिर्या सा च्रमाज्जलचन्द्रवत् । सर्वशून्यत्वमेवैवमिति ते दृढ आशयः ॥ १२१ ॥
तन्मिथ्या सर्वशून्यत्वपक्षे जुवनविश्रुताः । स्युः स्वप्नास्वप्नगन्धर्वपुरेतरन्निदा न हि ॥ १२२ ॥
इत्थं च छिन्नसंदेहो व्यक्तोऽपि [2]व्यक्तवासनः । परिवव्राज शिष्याणां शतैः पञ्चनिरन्वितः ॥ १२३ ॥
उपाध्यायः सुधर्मापि संशयच्छेदवाञ्छया । समाययौ महावीरमतुल्लालोकन्नास्करम् ॥ १२४ ॥
तमप्यजल्पज्जगवान् सुधर्मंस्तव धीरियम् । यादृगत्र जवे देही तादृक् परजवेऽपि हि ॥ १२५ ॥
कार्यं हि कारणस्यानुरूपं जवति [3]संसृतौ । न ह्युप्ते [4]कलमबीजे प्ररोहति यवांकुरः ॥ १२६ ॥

१ इच्छादीनाम । २ स्पष्टवासनावान् । ३ संसारे । ४ कलमं धान्यविशेषः ।

तन्न युक्तं यद्भवेऽस्मिन् यो मृदुत्वार्जवादिभिः । नरः कर्म नरायुष्कं बध्नाति स पुनर्नरः ॥ १२७ ॥
मायादियुक् पशुर्यस्तु स प्रेत्यापि पशुः खलु । कर्माधीना समुत्पत्तिस्तन्नानात्वं च जन्मिनाम् ॥ १२८ ॥
सदृशं कारणस्यैव कार्यमित्यप्यसंगतम् । शृंगप्रभृतिकेभ्योऽपि शरादीनां प्ररोहणात् ॥ १२९ ॥
इत्याकर्ण्य सुधर्मापि पञ्चशिष्यशतीयुतः । प्रव्रज्यामाददे पार्श्वे स्वामिपादारविन्दयोः ॥ १३० ॥
मंडिकोऽपि जगामाथ स्वामिनं संशयच्छिदे । स्वाम्यप्युवाच तं बन्धमोक्षयोस्तव संशयः ॥ १३१ ॥
तदसद्बन्धमोक्षौ हि प्रसिद्धौ तत्र चात्मनः । मिथ्यात्वादिकृतः कर्मसंबन्धो बन्ध उच्यते ॥ १३२ ॥
रज्जुबद्ध इव श्वभ्रतिर्यङ्नृसुरभूमिषु । दुःखं तेनानुभवति प्राणी परमदारुणम् ॥ १३३ ॥
ज्ञानदर्शनचारित्रप्रमुखैर्हेतुभिस्तु यः । वियोगः कर्मणां ज्ञेयः स मोक्षोऽनन्तशर्मदः ॥ १३४ ॥
अप्यनादिमिथःसिद्धयोगानां जीवकर्मणाम् । ज्ञानादिना स्याद्वियोगोऽग्निना स्वर्णाश्मनामिव ॥ १३५ ॥
इति स्वामिगिरा छिन्नसंशयो मंडिकोऽपि हि । सार्धत्रिशत्या शिष्याणां सहितो व्रतमाददे ॥ १३६ ॥
मौर्यपुत्रोऽपि संदेहच्छिदे स्वामिनमाययौ । स्वाम्यप्यूचे मौर्यपुत्र तव देवेषु संशयः ॥ १३७ ॥
स मिथ्या पश्य नन्वेतान् प्रत्यक्षमपि नाकिनः । अस्मिन् समवसरणे शक्रादीन् स्वयमागतान् ॥१३८॥
संगीतकादिवैयग्र्यान्मर्त्यगन्धाच्च दुःसहात् । नायान्ति शेषकालेऽमी तदभावो न तावता ॥ १३९ ॥
अर्हज्जन्माभिषेकादावायान्ति यदमी भुवि । प्रभावः कारणं तत्र गरीयान् श्रीमदर्हताम् ॥ १४० ॥
इति स्वामिगिरा बुद्धो मौर्यपुत्रोऽपि तत्क्षणम् । परिव्राज शिष्याणां सार्धं सार्धैस्त्रिभिः शतैः ॥१४१॥
यथावकंपितोऽपीशमीशोऽवोचदकंपित । न सन्त्यदृश्यमानत्वान्नारका इति ते मतिः ॥ १४२ ॥

१ कर्मसंबन्धेन बन्धेन । २ तेषां देवानामभावः ।

तदसन्नारकाः कामं पारतंत्र्यवशादिह । आगन्तुमक्षमा गन्तुं तत्र च त्वादृशा अपि ॥ १४३ ॥
प्रत्यक्षं नोपलभ्यास्ते युक्तिगम्या भवादृशाम् । प्रत्यक्षा एव ते सन्ति क्षायिकज्ञानिनां पुनः ॥ १४४ ॥
क्षायिकज्ञानिनोऽप्यत्र नो सन्तीति स्म मा ब्रवीः । मयैव व्यभिचारोऽस्या आशंकायाः परिस्फुटम् ॥ १४५ ॥
इति श्रुत्वा प्रतिबुद्धोऽकंपितः स्वामिनोऽन्तिके । उपाददे परिव्रज्यां त्रिभिः शिष्यशतैः समम् ॥ १४६ ॥
अथागादचलभ्राता प्रभुं प्रभुरपि स्फुटम् । ऊचे तवाचलभ्रातः सन्देहः पुण्यपापयोः ॥ १४७ ॥
मा कृथाः संशयं तत्र यत्फलं पुण्यपापयोः । प्रत्यक्षं दृश्यते लोके तथैव व्यवहारतः ॥ १४८ ॥
दीर्घमायुः श्रियो रूपमारोग्यं जन्म सत्कुले । इत्यादि पुण्यस्य फलं विपरीतं तु पाप्मनः ॥ १४९ ॥
इत्थं भगवता छिन्नसंशयः समुपाददे । प्रव्रज्यामचलभ्राता त्रिभिः शिष्यशतैः सह ॥ १५० ॥
मेतार्यः स्वामिनमगात् स्वाम्यूचे तव धीरियम् । भवान्तरप्राप्तिरूपः परलोको न विद्यते ॥ १५१ ॥
भूतसंदोहरूपत्वाज्जीवस्येह चिदात्मनः[1] । परलोकः कथं भूताभावे तस्याप्यभावतः ॥ १५२ ॥
तदसत् खलु जीवस्य भूतेभ्यो हि स्थितिः पृथक् । पिंडितेष्वपि भूतेषु चेतनानुपलंभतः[2] ॥ १५३ ॥
भूतेभ्यश्चेतनाप्येवं जीवधर्मतया पृथक् । परलोकगतिस्तस्याजातिस्मृत्यादितोऽपि च ॥ १५४ ॥
इत्थं प्रबुद्धो मेतार्यः समीपे स्वामिपादयोः । शिष्यत्रिशत्या सहितः परिव्रज्यामुपाददे ॥ १५५ ॥
प्रभुमागात् प्रभासोऽपि तमूचे भगवानपि । निर्वाणमस्ति नो वेति प्रभास तव संशयः ॥ १५६ ॥
मा संशयिष्ठा निर्वाणं मोक्षः कर्मक्षयः स तु । वेदात् सिद्धं कर्म जीवावस्थावैचित्र्यतोऽपि च ॥ १५७ ॥

१ चैतन्यस्वरूपस्य जीवस्य पचमहाभूतसमूहरूपत्वात्परलोको न घटते भूतानामभावे सति तस्य जीवस्याप्यभावादिति संशयाभिप्रायः । २ चेतनाया अनुपलंभादप्राप्तेः ।

क्षीयते कर्म शुद्धैस्तु ज्ञानचारित्रदर्शनैः । प्रत्यक्षोऽतिशयज्ञानभाजां मोक्षस्तदस्ति भोः ॥ १५८ ॥
प्रतिबुद्धः प्रभासोऽपि स्वाम्युपन्यस्तया गिरा । दीक्षामादत्त सहितः [1]खंडिकानां त्रिभिः शतैः ॥१५९॥
महाकुला महाप्राज्ञाः संविग्ना विश्ववन्दिताः । एकादशापि तेऽभूवन्मूलशिष्या जगद्गुरोः ॥ १६० ॥
इतश्च चन्दना तत्र शतानीकगृहे स्थिता । पश्यन्ती यान्तमायान्तं दिविषज्जनमंबरे ॥ १६१ ॥
स्वामिनः केवलोत्पत्तिनिश्चयाद्व्रतकांक्षिणी । त्रिदशैरदवीयोभिर्निन्ये श्रीवीरपर्षदि ॥ १६२ ॥
स त्रिः प्रदक्षिणीकृत्य नत्वा चोपास्थितः प्रभुम् । प्रव्रज्यार्थं नृपामात्यपुत्र्यो बह्व्योऽपरा अपि ॥१६३॥
चन्दनां धुरि कृत्वा ताः स्वयं प्राव्राजयत् प्रभुः । अस्थापयच्छ्रावकत्वे नृन्नारीश्च सहस्रशः ॥ १६४ ॥
जाते संघे चतुर्धैवं ध्रौव्योत्पादव्ययात्मिकाम् । इन्द्रभूतिप्रभृतीनां त्रिपदीं व्याहरत् प्रभुः ॥ १६५ ॥
आचारांगं सूत्रकृतं स्थानांगं समवाययुक् । पंचमं भगवत्यंगं ज्ञातधर्मकथापि च ॥ १६६ ॥
उपासकांतकृदनुत्तरोपपातिकादशाः । प्रश्नव्याकरणं चैव विपाकश्रुतमप्यथ ॥ १६७ ॥
दृष्टिवादश्चेत्यंगानि तत्रिपद्या कृतानि तैः । पूर्वाणि दृष्टिवादान्तः सूत्रितानि चतुर्दश ॥ १६८ ॥
तत्रोत्पादाग्रायणीये वीर्यप्रवादमित्यपि । अस्तिनास्तिप्रवादं च ज्ञानप्रवादनाम च ॥ १६९ ॥
सत्यप्रवादमात्मप्रवादं कर्मप्रवादयुक् । प्रत्याख्यानं च विद्याप्रवादकल्याणके अपि ॥ १७० ॥
प्राणावायाभिधानं च क्रियाविशालमित्यपि । लोकविन्दुसारमथ पूर्वाण्येवं चतुर्दश ॥ १७१ ॥
सूत्रितानि गणधरैरंगेभ्यः पूर्वमेव यत् । पूर्वाणीत्यभिधीयन्ते तेनैतानि चतुर्दश ॥ १७२ ॥
एवं रचयतां तेषां सप्तानां गणधारिणाम् । परस्परमजायन्त विभिन्नाः सूत्रवाचनाः ॥ १७३ ॥

१ शिष्याणाम् । २ अनतिदूरस्थै, समीपस्थैरित्यर्थः ।

अकंपिताचलभ्रात्रोः श्रीमेतार्यप्रभासयोः । परस्परमजायन्त सदृक्षा एव वाचनाः ॥ १७४ ॥
श्रीवीरनाथस्य गणधरेष्वेकादशस्वपि । द्वयोर्द्वयोर्वाचनयोः साम्यादासन् गणा नव ॥ १७५ ॥
सौगन्धिकरत्नचूर्णपूर्णमादाय भाजनम् । उत्थाय स्वामिपार्श्वेऽस्थात् समयज्ञोऽथ वज्रभृत् ॥ १७६ ॥
तेऽपीन्द्रभूतिप्रमुखाः परिपाट्यावतस्थिरे । प्रतीक्षवः स्वाम्यनुज्ञां किंचिन्नमितमौलयः ॥ १७७ ॥
द्रव्यैर्गुणैः पर्यायैश्चानुज्ञातं तीर्थमित्यथ । जल्पन् स्वाम्यक्षिपत् पूर्वं चूर्णं गौतममूर्धनि ॥ १७८ ॥
अप्यन्येषां क्रमात् स्वामी चूर्णं चिक्षेप मूर्धसु । पुष्पवर्षं चूर्णवर्षं प्रीता देवाश्च चक्रिरे ॥ १७९ ॥
चिरंजीवी चिरं धर्मं द्योतयिष्यत्यसाविति । धुरि कृत्वा सुधर्माणमन्वज्ञासीद्गणं प्रभुः ॥ १८० ॥
साध्वीनां संयमोद्योगघटनार्थं तदैव च । प्रवर्तिनीपदे स्वामी स्थापयामास चन्दनाम् ॥ १८१ ॥
पूर्णप्रथमपौरुष्यां देशनां व्यसृजत् प्रभुः । राजोपनीतस्तत्र प्राग्द्वारेण प्राविशद्बलिः ॥ १८२ ॥
उदस्तस्य बलेस्तस्य खेऽप्यर्धं जगृहुः सुराः । अर्धस्य पतितस्यार्धं राजा शेषं पुनर्जनाः ॥ १८३ ॥
अथोत्थाय जगन्नाथो देवच्छन्द उपाविशत् । स्वाम्यंघ्रिपीठे चासीनो गौतमो देशनां व्यधात् ॥ १८४ ॥
द्वितीयस्यां तु पौरुष्यां पूर्णायां गौतमोऽपि हि । देशनाया विरराम वृष्टेरिव नवांबुदः ॥ १८५ ॥
तत्रातिगम्य कतिचिद्दिवसानि विश्वविश्वोपकारनिरतः प्रतिबोध्य लोकम् ।
स्वामी सुरासुरनरेश्वरसेव्यमानपादारविन्दयुगलो विजहार पृथ्व्याम् ॥ १८६ ॥

॥ इत्याचार्यश्रीहेमचन्द्रसूरिविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये दशमे पर्वणि महावीरकेवलज्ञानचतुर्विधसंघोत्पत्तिवर्णनो नाम पंचमः सर्गः ॥

---

१ उत्क्षिप्तस्य । २ आकाशे ।

## ॥ षष्ठः सर्गः ॥

इतश्चात्रैव भरते कुशाग्रपुरपत्तने । कुशाग्रीयमतिर्[1]भूत् प्रसेनजिदिलापतिः[2] ॥ १ ॥

अलंकृताशेषदिक्कस्तस्यापारो यशोऽर्णवः । जग्रसे विद्विषां कीर्तिनिर्झरिणीः समन्ततः ॥ २ ॥

तस्याभूत् केवलं राज्यशोभायै सैन्यसंग्रहः । यत्प्रतापानलेनैव वैरिव्याघ्राननाशयत् ॥ ३ ॥

स्खल्योऽङ्घ्रिणा वायुरपि दंभोलि[3]रपि वार्धिना[4] । आज्ञा तस्य पुनः पृथ्व्यामस्खल्यत न केनचित् ॥ ४ ॥

स प्रसारितपाणिभ्यो याचकेभ्यो ददद्वसु । तेषामिव स्पर्धया स्वं न पाणिं समकोचयत् ॥ ५ ॥

हित्वा स्वस्वपतीन् जातेऽन्धकारे रणरेणुभिः । तमालिलिंगुः सर्वांगं जयलक्ष्म्योऽभिसारिकाः[5] ॥ ६ ॥

शुद्धे मनसि तस्याभूत्सदाचारशिरोमणेः । जिनधर्मः स्थिरः सान्द्रे[6] केशपाशेऽधिवासवत् ॥ ७ ॥

श्रीमत्पार्श्वजिनाधीशशासनांभोजषट्पदः[7] । सम्यग्दर्शनपुण्यात्मा सोऽणुव्रतधरोऽभवत् ॥ ८ ॥

राज्ञां कन्याभिरूढाभिस्तस्योर्वीशशिरोमणेः । अवरोधोऽभवद्भूयान् दिवीव दिविषत्पतेः[8] ॥ ९ ॥

पाकशासनतुल्यस्य शासतस्तस्य मेदिनीम् । सूनवो बहवोऽभूवंस्तन्मूर्तय इवापराः ॥ १० ॥

इतश्चात्रैव भरते वसन्तपुरपत्तने । यथार्थनामा समभूज्जितशत्रुर्महीपतिः ॥ ११ ॥

अमरीव भुवं प्राप्ता तस्य चामरसुन्दरी । बभूव पट्टमहिषी गुणरत्नमहाखनिः ॥ १२ ॥

---

१ तीक्ष्णबुद्धिः । २ पृथ्वीपतिः । ३ दंभोलिर्वज्रम् । ४ समुद्रेण । ५ इष्टनायक सन्मुखगामिन्यो नायिकाः । ६ गाढे । ७ षट्पदो भ्रमरः । ८ दिविषदां देवानां पतेरिन्द्रस्य ।

तयोः सुमंगलो नाम मंगलानां निवासभूः । सुतोऽभूद्रूपकन्दर्पः कलानां निधिरिन्दुवत् ॥ १३ ॥
सेनको नाम सवयास्तस्याभून्मंत्रिपुत्रकः । अलक्षणानां सर्वेषामुदाहरणमादिमम् ॥ १४ ॥
स पिंगकेशो दावाग्निदीप्तशृंग इवाचलः । घूकवच्चिपिटघ्राणो मार्जार इव पिंगदृक् ॥ १५ ॥
उष्ट्रवल्लंबकंठौष्ठ आखुवल्लघुकर्णकः । मुखकन्दांकुराकारबहिर्भूतरदावलिः[1] ॥ १६ ॥
जलोदरीवोदरिलो[2] ह्रस्वोरुर्ग्रामकोलवत्[3] । मंडलस्थानकेनेव[4] वक्रजंघोऽतिशूर्पपात् ॥ १७ ॥
॥ त्रिभिर्विशेषकम् ॥
संचचार दुराकारो वराको यत्र यत्र सः । जगाम तत्र तत्रापि हास्यमेकातपत्रताम् ॥ १८ ॥
दूरतोऽपि तमायान्तं राजपुत्रः सुमंगलः । जहास विकृताकारं विलोक्येव विदूषकम् ॥ १९ ॥
एवं च राजपुत्रेण हस्यमानो दिवानिशम् । वैराग्यं सेनको भेजेऽपमानद्रुमहाफलम् ॥ २० ॥
अथ संजातवैराग्यो मन्दभाग्यस्ततः पुरात् । निरगाच्छून्यहृदय उन्मत्त इव सेनकः ॥ २१ ॥
सुमंगलकुमारोऽपि मंत्रिपुत्रे निरीयुषि[5] । कालेन कियताप्यात्मराज्ये पित्रा न्यवेशयत ॥ २२ ॥
सेनकोऽपि भ्रमन्नेकं दृष्ट्वा कुलपतिं वने । तत्पार्श्वे तापसो भूत्वा गृह्णाति स्मोष्ट्रिकाव्रतम् ॥ २३ ॥
तीव्रेण तपसा नित्यं स्वमत्यन्तं कदर्थयन् । वसन्तपुरमेवागादपरेद्युः संतापसः[6] ॥ २४ ॥
मंत्रिसूस्तापसश्चेति तमानर्च जनोऽखिलः । वैराग्यकारणं पृष्टः कथयामास चेति सः ॥ २५ ॥

---

१ रदावलिर्दन्तपङ्क्तिः । २ जलोदरव्याधिमानिव बृहदुदरवान् । ३ ग्राम वराहवत् । ४ मंडलस्थानकमासनविशेषः । ५ निर्गते सति । ६ गुरुसहितः ।

सुमंगलकुमारेण रूपमेतदहासि मे । वैराग्यं तेन मे जातं सत्यंकारस्तपःश्रियः ॥ २६ ॥
तच्छ्रुत्वा तं नमस्कर्तुं सुमंगलनृपोऽन्यगात् । क्षमयित्वा पारणाय न्यमंत्रयत चादरात् ॥ २७ ॥
सोऽपि राज्ञे प्रदत्ताशीरनुमेने तदर्थनाम् । कृतकृत्य इवागाच्च राजापि निजवेश्मनि ॥ २८ ॥
पूर्णेऽथ मासक्षपणे नृपतेः प्रार्थनां स्मरन् । शान्तात्मा राजभवनद्वारमाप स तापसः ॥ २९ ॥
शरीरासौष्ठवमभूत्तदा च पृथिवीपतेः । द्वारं च पिदधे द्वास्थः कस्तदा भिक्षुमीक्षते ॥ ३० ॥
स्खलितो द्वारदानेन सेतुनेव जलप्लवः । पथा यथागतेनैव तपस्वी [1]व्याजुघोट सः ॥ ३१ ॥
निश्चित्य मासक्षपणं ययौ च पुनरुष्ट्रिकाम् । न चाकुप्यत्तपोवृद्धौ हृष्यन्ति हि महर्षयः ॥ ३२ ॥
स्वस्थीभूतो द्वितीयेऽह्नि भक्तो राजा तपस्विषु । गत्वा नत्वा क्षमयित्वा पुनरेवमुवाच तम् ॥ ३३ ॥
निमंत्रितोऽसि पुण्याय मया[2]घं पुनरार्जितम् । प्रायः पापनिवासानां पापमेवातिथीयते ॥ ३४ ॥
तवान्यत्रापि भगवन्निषिद्धं पारणं मया । अदातुर्हि प्रियालापोऽन्यत्र लाभान्तरायकृत् ॥ ३५ ॥
तत्प्रसीद द्वितीयेऽपि मासक्षपणपारणे । मत्प्रांगणमलंकुर्याः कल्प[3]शाखीव नन्दनम् ॥ ३६ ॥
तथेति प्रतिपेदाने तापसेऽगान्नृपो गृहम् । गणयन्नङ्गुलीस्तस्थौ तत्पारणदिनाय च ॥ ३७ ॥
पूर्णे च मासक्षपणे स तपस्वी नृपौकसि । ययौ दैवादभूद्राज्ञः प्राग्व[4]त्पुरपाटवम् ॥ ३८ ॥
तथैव पिहिते द्वारे व्याघुट्यागात्स उष्ट्रिकाम् । स्वस्थीभूतोऽथ तं राजा न्यमंत्रयत पूर्ववत् ॥ ३९ ॥
पूर्णेऽथ मासक्षपणे तृतीयेऽपि स तापसः । तथैवागात्तथैवाभूद्राज्ञः पुनरपाटवम् ॥ ४० ॥

१ न्यवर्तत । २ पापम् । ३ कल्पवृक्षः । ४ वपुषोऽपाटवमस्वास्थ्यम् ।

राजकीयैरचिन्त्येष तपस्व्येति यदा यदा । तदा तदा भवत्यस्मत्स्वामिनोऽशिवमेव हि ॥ ४१ ॥
ते चारक्षानथादिक्षंस्तपस्वी मंत्रिसूरपि । प्रविशन्नप्यसौ सर्प इव निर्वास्यतामहो ॥ ४२ ॥
कृते तथैवारक्षैश्च निदानं तापसोऽकरोत् । भूयासमहमेतस्य वधाय नृपतेरिति ॥ ४३ ॥
मृत्वा च तापसो जज्ञे सोऽल्पर्द्धिर्वानमन्तरः । राजापि तापसो भूत्वा तामेव गतिमाप सः ॥ ४४ ॥
च्युत्वा सुमंगलः सोऽथ प्रसेनजिदिलापतेः । सुतोऽभूच्छ्रेणिको नाम धारिणीकुक्षिसंभवः ॥ ४५ ॥
इतश्च तत्रैव पुरे रथिको नाग इत्यभूत् । प्रसेनजिन्महीपालचरणांभोजषट्पदः ॥ ४६ ॥
दयादानार्हतो दाता परनारीसहोदरः । वीरो धीरोऽधीतकलः स सर्वगुणभूरभूत् ॥ ४७ ॥
नामधेयेन सुलसाऽनलसा[1] पुण्यकर्मणि । बभूव गेहिनी तस्य पुण्यश्रीरिव देहिनी ॥ ४८ ॥
पतिव्रतात्वसम्यक्त्वार्जवप्रभृतयो गुणाः । तस्यां युगपदावात्सुः सपांशुक्रीडका इव ॥ ४९ ॥
एकदा नागरथिकोऽपुत्रोऽचिन्तयदुच्चकैः । स नालनलिनाकारकरतल्पशयाननः[2] ॥ ५० ॥
पुत्रमुल्लापयिष्यामि लालयिष्यामि चेति मे । अपुत्रस्यावकेशीव[3] निष्फलोऽभून्मनोरथः ॥ ५१ ॥
न बाल्याद्ब्रह्म विदधे पुत्रवक्त्रं च नैक्षि यैः । धिक् तेषां कामवैवश्यं लोकद्वितयवंचकम् ॥ ५२ ॥
इति चिन्ताविवर्णास्यं[4] पंकमग्नमिव द्विपम् । पतिं प्रोवाच सुलसा विनयाञ्चिताञ्जलिः ॥ ५३ ॥
हस्तशय्या मुखस्येयं चिन्तामाख्याति नाथ ते । किं चिन्तयस्यादिश मे मां चिन्ताभागिनीं कुरु ॥५४॥



१ आलस्यरहिता । २ पद्मनालस्य नलिनं तदाकारो यः करस्तदेव तल्पं तस्मिन् शेते इति शयमेतादृशमाननं यस्य सः । ३ वन्ध्य इव । ४ चिन्तया मलिनमास्यं यस्य तम् ।

नागोऽप्याख्यदपुत्रोऽस्मि पुत्रकौतूहलं च मे । न किंचिदस्त्यौपयिकं पुत्रीयं[1] पुत्रकाम्यतः ॥ ५५ ॥
सुलसोवाच कन्यास्त्वं बह्वीः परिणयापराः । पुत्रप्रसविनी तासु किमेकापि न नाविनी ॥ ५६ ॥
नागोऽप्यूचे त्वयैवाहं जायावानिह जन्मनि । जायाभिः कृतमन्याभिस्तत्पुत्राणां तु का कथा ॥ ५७ ॥
त्वदंगसंभवं पुत्रमिच्छामि प्रियदर्शने । स आवयोः प्रीतिवल्लेः फलायेत चिरादपि ॥ ५८ ॥
त्वं प्राणास्त्वं प्रतिवपुस्त्वं मंत्री त्वं च मे सखा । तद्यतस्व सुतार्थेऽस्मिन्नुपयाचितकादिभिः ॥ ५९ ॥
सुलसोचे करिष्येऽहमर्हदाराधनां प्रिय । अर्हदाराधनैवैका सर्वकार्येषु कामधुक् ॥ ६० ॥
आचामाम्लादिभिरथ तपोभिरतिदुस्तपैः । आजन्मापि पवित्रं स्वं[2] पावयन्ती विशेषतः ॥ ६१ ॥
मितमौक्तिकालंकारा नवोत्फुल्लेव मल्लिका । कौसुंभवसना संध्येवारुणाभ्रा प्रगेतनी[3] ॥ ६२ ॥
वीतरागार्चनपरा ब्रह्मचर्यपरायणा । समाहितमनाः साभूत्पतिदुःखार्द्रमानसा ॥ ६३ ॥
॥ त्रिभिर्विशेषकम् ॥

इतश्च शक्रः सदसि प्रशंसामिति निर्ममे । श्राविका भुव सुलसां[4] सांप्रतं भरतावनौ ॥ ६४ ॥
एको देवस्तदाकर्ण्य विस्मयोत्कर्णिताननः[5] । सुलसायाः श्राविकात्वं परीक्षितुमुपाययौ ॥ ६५ ॥
देवार्चनप्रसक्तायाः सुलसायाः स वेश्मनि । प्राविशत् साधुरूपेण विरचय्य निषेधिकाम् ॥ ६६ ॥
सुलसापि हि तं दृष्ट्वानभ्रवृष्टिवदागतम् । भक्त्या ववन्देऽपृच्छच्च तदागमनकारणम् ॥ ६७ ॥

१ पुत्रसंबन्धि । २ आत्मानम् । ३ प्रातःकालिकी रक्ताभ्रवती संध्येव । ४ अन्याः श्राविकाः सुलसाया उपहीनाः । ५ विस्मयेनोत्कर्णितमूर्ध्वकर्णवदाननं यस्य सः ।

स उवाच ममाख्यातं वैद्येन त्वगृहेऽस्ति यत् । लक्षपाकं महातैलं ग्लानार्थं तत्प्रदीयताम् ॥ ६८ ॥
सफलस्तैलपाकोऽयं साधावुपकरिष्यते । इत्युदीर्य मुदा तैलकुंभमन्यानिनाय सा ॥ ६९ ॥
स तैलकुंभो देवेन स्वशक्त्या पातितः करात् । झाक्तु त्रडिति पुस्फोट कुलायगलितांडवत् ॥ ७० ॥
तैलकुंभो द्वितीयोऽपि तया पुनरढौक्यत । तथैव सोऽपि स्फुटितो न पुनर्विषसाद सा ॥ ७१ ॥
तैलकुंभस्तृतीयोऽपि तया नीतस्तथास्फुटत् । सा दध्यौ चाल्पपुण्यास्मि मोघयाञ्चेन साधुना ॥ ७२ ॥
देवस्ततो निजं रूपं धृत्वेति निजगाद ताम् । भद्रे तव श्राविकात्वं प्रशशंस दिवस्पतिः ॥ ७३ ॥
शक्रप्रशंसया चैव विस्मितः स्वर्गवास्यहम् । त्वत्परीक्षार्थमायातस्तुष्टोऽस्मि च वरं वृणु ॥ ७४ ॥
सुलसा श्राविकाप्यूचे यदि तुष्टोऽसि तन्मम । देहि पुत्रमपुत्राया नान्यदिष्टमतः परम् ॥ ७५ ॥
द्वात्रिंशतं स गुटिका दत्वा देवोऽब्रवीदिदम् । क्रमेण भक्षयेरेतास्तावन्तः स्युः सुतास्तव ॥ ७६ ॥
पुनः प्रयोजनवशात् स्मर्तव्योऽहं त्वयानघे । एष्यामि भूय इत्युक्त्वा त्रिदशः स तिरोदधे ॥ ७७ ॥
अचिन्तयच्च सुलसा क्रमेण गुटिकादनात् । बहूनां बालरूपाणां मर्दिष्यति हि कोऽशुचिम् ॥ ७८ ॥
तस्मात्प्राश्नाम्यहं सर्वा युगपद्गुटिका इमाः । यथैकोऽपि भवेत् पुत्रो द्वात्रिंशल्लक्षणान्वितः ॥ ७९ ॥
इत्थं विमृश्य स्वधिया सा प्राश्नाद्गुटिकाः समाः । तथा बुद्धिरियं जज्ञे नान्यथा भवितव्यता ॥ ८० ॥
उत्पेदिरे तदुदरे गर्भा द्वात्रिंशदप्यथ । तैर्गर्भैरसहा साभूद्वल्लीव बहुभिः फलैः ॥ ८१ ॥
सा गर्भान् धर्तुमसहा वज्रसारान् कृशोदरी । कायोत्सर्गस्थिता देवं सस्मार पुनरेव तम् ॥ ८२ ॥

१ नीडपतितांडवत् । २ निष्फला याञ्चा यस्य तेन । ३ इन्द्रः । ४ स्वर्गे वसतीति तथा देव इति यावत् । ५ क्षालयिष्यति ।

सुज्येष्ठैवं गुणज्येष्ठा तस्या धर्मं निराकरोत् । श्रुतकूपनिपानाभैर्वचोभिर्युक्तिवर्मितैः ॥ २०० ॥
ततो निरुत्तरीभूतां तां मुद्रितमुखीमिव । शुद्धान्तदास्यो जहसुर्मुखमर्कटिकादिभिः ॥ २०१ ॥
स्वस्वामिनीजयोन्मत्तास्तामन्तःपुरचेटिकाः । उत्तालतुमुलाः कंठे गृहीत्वा निरवासयन् ॥ २०२ ॥
उपादातुं गता दातुं प्रतीतेवाथ तापसी । पूजार्थिन्यागता सैवं प्रत्युतानर्थमासदत् ॥ २०३ ॥
यान्ती च तापसी दध्याविमां वैदग्ध्यगर्विताम् । भूयसीषु सपत्नीषु दुःखपात्रीकरोम्यहम् ॥ २०४ ॥
सुज्येष्ठारूपमथ सा पिंडस्थध्यानलीलया । कृत्वा मनस्यालिलेख पटेऽखिलकलापटुः ॥ २०५ ॥
लिखितं तच्च तद्रूपं त्वरिता क्रूरतापसी । गत्वा राजगृहे राज्ञेऽदर्शयच्छ्रेणिकाय सा ॥ २०६ ॥
तां दृष्ट्वा लिखितां नेत्रैर्मृगैकमृगजालिकाम् । राजा राजगृहाधीशः सानुरागमवर्णयत् ॥ २०७ ॥
यान्त्यस्याः केशदासत्वं ते कलापाः कलापिनाम् । मनोज्ञनयनं वक्त्रं निलीनालीव पंकजम् ॥ २०८ ॥
पत्रावलंबनं कंबोः कुरुते कंठकन्दलः । क्रीडत्कोकं सर इव वक्षो वक्षोजभूषितम् ॥ २०९ ॥
नितंबः स्मरधानुष्कयोग्या भूरिव विस्तृतः । आलानविभ्रमहरावूरू च क्रमवर्तुलौ ॥ २१० ॥
विसकांडविडंबिन्यौ जंघे सरलकोमले । पादौ च ऋजुजंघाकावुन्नालनलिनोपमौ ॥ २११ ॥
अहो सौन्दर्यमद्वैतमहो लावण्यमुज्ज्वलम् । अहो अपरमप्यस्याः सर्वं रम्यं मृगीदृशः ॥ २१२ ॥

१ श्रुतस्यागमस्य कूपनिपानसदृशैः । २ अन्तःपुरदास्यः । ३ नेत्रमेव मृगस्तस्य ग्रहण एकाद्वितीया मृगजालसमाना ताम् । ४ मयूराणाम् । ५ निलीना नितरा लीना अलयो भ्रमरा यस्मिंस्तदिव । ६ शंखस्य । ७ स्तनभूषितम् । ८ स्मर एव धनुर्धरस्तस्य योग्या । ९ आलानो गजबंधनस्तंभः ।

अपृच्छच्च महाभागे किमियं स्त्रीमतल्लिका । अलेखि स्वप्रतिभया रूपदर्शनतोऽथवा ॥ २१३ ॥
तापस्यूचे यथाशक्ति दृष्टं रूपमलेख्यदः । यादृक्तु वर्तते राजंस्तादृक् स्यादर्पणे यदि ॥ २१४ ॥
चित्रस्थामपि तां राजा प्रपश्यन् प्रेममोहितः । आलिलिंगिषुरिवाभूच्चुचुंबिषुरिवाथवा ॥ २१५ ॥
ऊचे च मुक्तावलिवद्वंशे कस्मिन्नभूदियम् । दिवं मृगांकलेखेव कां चालंकुरुते पुरीम् ॥ २१६ ॥
धन्यस्य कस्य वा पुत्री लक्ष्मीः क्षीरोदधेरिव । यान्त्यस्याः कानि वा पुण्यान्यक्षराण्यभिधानताम् २१७
सरस्वत्याऽनुजगृहे कलयेयं कया कया । अस्याः पुंस्पाणिना पाणिश्चुंबितो यदि वा न वा ॥ २१८ ॥
तापसी कथयामास वैशाल्यधिपतेः सुता । हैहयान्वयजातस्य चेटकस्य कुमार्यसौ ॥ २१९ ॥
निधिः कलानां सर्वासां सुज्येष्ठा नामधेयतः । गुणरूपानुरूपेण तत्तामुद्वोढुमर्हसि ॥ २२० ॥
त्वयि सत्यपि चेदस्याः पतिरन्यो भविष्यति । तृतीयपुरुषार्थेन तर्हि त्वमसि वंचितः ॥ २२१ ॥
विसृज्य तापसीं तस्थौ कथंचिदथ पार्थिवः । पक्षौ विधाय वैशाल्यां यियासुरिव तां स्मरन् ॥ २२२ ॥
सुज्येष्ठाप्रार्थने दत्वा शिक्षां राजगृहेश्वरः । अन्येद्युः प्रेषयामास दूतं चेटकभूपतेः ॥ २२३ ॥
दूतोऽपि सद्यो वैशाल्यां गत्वा नत्वा च चेटकम् । उवाच वाचिकपटुर्न यच्चटु[3] न वा कटु ॥ २२४ ॥
सुज्येष्ठां याचते त्वत्तो मत्स्वामी मगधाधिपः । न कन्याप्रार्थनं जातु लज्जायै महतामपि ॥ २२५ ॥
चेटकोऽप्यब्रवीदेवमनात्मज्ञस्तव प्रभुः । वाहीककुलजो वाञ्छन् कन्यां हैहयवंशजाम् ॥ २२६ ॥
समानकुलयोरेव विवाहो हन्त नान्ययोः । तत्कन्यां न हि दास्यामि श्रेणिकाय प्रयाहि भोः ॥ २२७ ॥

१ प्रशस्ता स्त्री । २ स्वबुद्ध्या । ३ मधुरं वचः ।

स्मृतमात्रोपस्थितेन सद्यस्तेनामरेण सा । किं स्मृतोऽस्मीति पृष्टाख्यत्तां तथा गुटिकाकथाम् ॥ ८३ ॥
देवोऽवदत् किं गुटिका युगपद्भक्षितास्त्वया । अमोघाः खल्विमास्तेन गर्भास्तावन्त एव ते ॥ ८४ ॥
न साधु विदधे भद्रे त्वयेदमृजुचेतसा । पुत्रास्तुल्यायुषो ह्येवं द्वात्रिंशदपि भाविनः ॥ ८५ ॥
मा विषीद महाभागे बलिष्ठा भवितव्यता । गर्भपीडापहारं तु करिष्ये सुस्थिता भव ॥ ८६ ॥
सुलसाया गर्भपीडामपहृत्य स नाकसद्[1] । जगाम साभूत्स्वस्था च गूढगर्भा च भूरिव ॥ ८७ ॥
पूर्णे काले च सुलसा शुभेऽहनि शुभे क्षणे । द्वात्रिंशल्लक्षणान् पुत्रान् द्वात्रिंशतमजीजनत् ॥ ८८ ॥
धात्रीभिर्लाल्यमानास्ते क्रमाद्ववृधिरे सुताः । कलभा इव विन्ध्याद्रावखंडितसमीहिताः ॥ ८९ ॥
प्रांगणे ते रुरुचिरे रममाणाः कुमारकाः । गृहलक्ष्मीविहंगम्याः[2] क्रीडाक्षितिरुहा इव ॥ ९० ॥
उत्संगे नागरथिको ग्राहं ग्राहं[3] कुमारकान् । स्नेहादस्नपयद्दिवानन्दजैर्बाष्पवारिभिः ॥ ९१ ॥
पादक्रोड[4]शिरोदेशे लगमानैः कुमारकैः । विरेजे नागरथिकः सिंहपोतैरिवाचलः ॥ ९२ ॥
सर्वेऽपि नागरथिनः सूनवो वयसा समाः । ते श्रेणिककुमारस्य बभूवुरनुयायिनः ॥ ९३ ॥
अन्यदा च स्वपुत्राणां राज्यार्हत्वं परीक्षितुम् । एकत्र पायसस्थालान्यशनाय नृपोऽर्पयत् ॥ ९४ ॥
ततो भोक्तुं प्रवृत्तानां कुमाराणाममोचयत् । व्याघ्रानिव व्यात्तवक्त्रान् सारमेयान् स सारधीः ॥ ९५ ॥
कुमारा द्रुतमुत्तस्थुरापतत्सु ततः श्वसु[5] । एकस्तु श्रेणिकस्तस्थौ धियां धाम तथैव हि ॥ ९६ ॥
सोऽन्यस्थालात्पायसान्नं स्तोकं स्तोकं शुनां ददौ । यावल्लिलिहिरे श्वानस्तावच्च बुभुजे स्वयम् ॥ ९७ ॥

---

१ देवः । २ गृहलक्ष्म्य एव विहंगमाः पक्षिणस्तत्संबन्धिनः । ३ गृहीत्वा गृहीत्वा । ४ क्रोडं वक्षः । ५ सारमेयेषु ।

येन केनाप्युपायेन परानेष निरोत्स्यति । जेष्यते च स्वयं पृथ्वीं राजा तेनेति रञ्जितः ॥ ९८ ॥
राजा पुनः परीक्षार्थं सुतानामन्यदा ददौ । मोदकानां करंडांश्च पयस्कुंभांश्च मुद्रितान् ॥ ९९ ॥
इमां मुद्रामभंजंतो भुञ्जीध्वं मोदकानमून् । पयः पिबत मा कृढ्वं छिद्रमित्यादिशन्नृपः ॥ १०० ॥
विना श्रेणिकमेतेषां कोऽपि नाभुक्त नापिबत् । बुद्धिसाध्येषु कार्येषु कुर्युरूर्जस्विनोऽपि किम् ॥ १०१ ॥
वलयित्वा वलयित्वा श्रेणिकस्तु करंडकम् । बुभुजे मोदकक्षोदं शलाकाविवरच्युतम् ॥ १०२ ॥
रूप्यशुक्त्या घटस्याधो गलद्वार्बिन्दुपूर्णया । स पयोऽपि पपौ किं हि दुःसाध्यं सुधियां धियः ॥१०३॥
एवं परीक्षानिर्व्यूढं श्रेणिकं बुद्धिसंपदा । अमंस्त राज्यार्हतया कुशाग्रनगरेश्वरः ॥ १०४ ॥
कुशाग्रे चाभवद्भीग्रं शीघ्रमग्नेरुपद्रवः । ततश्चाघोषणां राजा प्रसेनजिदकारयत् ॥ १०५ ॥
उच्छ्रास्यति पुरे वह्निर्यस्य यस्य गृहादिह । स स निर्वासनीयोऽस्मात् पुरान्मेय इवामयी ॥ १०६ ॥
सूपकारप्रमादेन राज्ञ एवान्यदा गृहात् । उदस्थादग्निरग्निर्हि न स्वः कस्यापि विप्रवत् ॥ १०७ ॥
तस्मिन् प्रदीपने वृद्धिमुपेयुषि महीपतिः । यो यं गृह्णाति मद्गेहात्तत्तस्येत्यादिशत् सुतान् ॥ १०८ ॥
सर्वे कुमारा हस्त्यादि समादाय यथारुचि । निर्ययुः श्रेणिकस्त्वेकां भंभामादाय निर्ययौ ॥ १०९ ॥
किमेतत्कृष्टमित्युक्तो नृपेण श्रेणिकोऽवदत् । जयस्य चिह्नं भंभेयं प्रथमं पृथिवीभुजाम् ॥ ११० ॥
अस्याः शब्देन भूपानां दिग्यात्रामंगलं महत् । रक्षणीया क्षमापालैः स्वामिंस्तदियमेव हि ॥ १११ ॥

---

१ शत्रुन् । २ वलिनोऽपि । ३ मोदकचूर्णम् । ४ शलाकानां विवराण्यन्तराणि तेभ्यश्च्युतम् । ५ गलन्तो ये जलविन्दवस्तैः पूर्णया । ६ परीक्षया सुसंपन्नम् । ७ वारंवारम् । ८ उग्रः । ९ रोगी । १० स्वकीयः ।

ततश्चैवं महेच्छत्वप्रसन्नः पृथिवीपतिः । श्रेणिकस्य ददौ भंभासार इत्यपराभिधाम् ॥ ११२ ॥
इदं च न विसस्मार तदा राजा प्रसेनजित् । उत्तिष्ठेद्यद्गृहादग्निः स पुरे न वसेदिति ॥ ११३ ॥
ततश्चाचिंतयन्नाहमात्मानमनुशास्मि चेत् । सर्वथा तर्हि पर्याप्तं परेषामनुशासनम् ॥ ११४ ॥
इति तत्याज नगरं तद्राजा सपरिच्छदः । क्रोशेनैकेन च ततः शिबिरं स न्यवेशयत् ॥ ११५ ॥
सञ्चरन्तस्तदा चैवं वदन्ति स्म मिथो जनाः । क नु यास्यथ यास्यामो वयं राजगृहं[1] प्रति ॥ ११६ ॥
ततो राजगृहं नाम तत्रैव नगरं नृपः । चकार परिखावप्रचैत्यसौधाट्टबन्धुरम् ॥ ११७ ॥
राज्यार्हमानिनो[2] मैनं राज्यार्हं सूनवोऽपरे । ज्ञासिषुरित्यवाज्ञासीच्छ्रेणिकं पृथिवीपतिः ॥ ११८ ॥
पृथक् पृथक् कुमाराणां ददौ देशान्नरेश्वरः । न किंचिच्छ्रेणिकस्यास्तु राज्यमस्यायताविति[3] ॥ ११९ ॥
ततोऽभिमानी स्वपुरात् कलभः काननादिव । निःसृत्य श्रेणिकोऽगच्छद्वेणातटपुरं क्रमात् ॥ १२० ॥
तत्र च प्रविशन् भद्राभिधस्य श्रेष्ठिनोऽथ सः । कर्म लाभोदयं मूर्तमिवोपाविशदापणे ॥ १२१ ॥
तदा च नगरे तस्मिन् विपुलः कश्चिदुत्सवः । नव्यदिव्यदुकूलांगरागपौराकुलोऽभवत् ॥ १२२ ॥
प्रभूतक्रायकै[4]रासीत् स श्रेष्ठी व्याकुलस्तदा । कुमारोऽप्यार्पयद्दक्षा तत्पुटापुटिकादिकम् ॥ १२३ ॥
द्रव्यं कुमारसाहात्म्याच्छ्रेष्ठी भूयिष्ठमार्जयत् । पुण्यपुंसां विदेशेऽपि सहचर्यो ननु श्रियः ॥ १२४ ॥
अद्यावितथपुण्यस्य[5] कस्यातिथिरसीत्यथ । श्रेणिकः श्रेष्ठिना पृष्टो भवतामित्यभाषत ॥ १२५ ॥

---

१ राज्ञो गृहम् । २ आत्मानं राज्यार्हं मन्यन्त इति तथा । ३ अस्य श्रेणिकस्यायतौ परिणामे राज्यं भवत्विति हेतोः श्रेणिकस्य किंचिन्न ददावित्यन्वयः । ४ बहुग्राहकैः । ५ सत्यपुण्यवतः ।

नन्दायोग्यो वरो दृष्टः स्वप्नेऽद्य निशि यो मया । असौ साक्षात् स एवेति श्रेष्ठी चेतस्यचिन्तयत् १२६
सोऽन्नाविष्ट च धन्योऽस्मि यद्भवस्यतिथिर्मम । असावलसमध्येन ननु गंगा समागता ॥ १२७ ॥
संवृत्याट्टं ततः श्रेष्ठी तं नीत्वा निजवेश्मनि । स्नपयित्वा परिधाप्य सगौरवमभोजयत् ॥ १२८ ॥
एवं च तिष्ठंस्तद्गेहे श्रेणिकः श्रेष्ठिनान्यदा । कन्यां परिणयेमां मे नन्दां नाम्नेत्ययाच्यत ॥ १२९ ॥
ममाज्ञातकुलस्यापि कथं दत्से सुतामिति । श्रेणिकेनोक्त ऊचे स ज्ञातं तव गुणैः कुलम् ॥ १३० ॥
ततस्तस्यो[1]परोधेनोदधेरिव सुतां हरिः । श्रेणिकः पर्यणैषीत्तां भवदुज्ज्वलमंगलम् ॥ १३१ ॥
भुञ्जानो विविधान् भोगान् सह वल्लभया तया । अतिष्ठच्छ्रेणिकस्तत्र निकुञ्ज इव कुञ्जरः ॥ १३२ ॥
श्रेणिकस्य स्वरूपं तद्विवेदाशु प्रसेनजित् । सहस्राक्षा हि राजनो भवन्ति चर[2]लोचनैः ॥ १३३ ॥
उग्रं प्रसेनजिद्रोगं प्रापाथान्तं विदन्निजम् । ततः श्रेणिकमानेतुं शीघ्रमादिशदौष्ट्रिकान् ॥ १३४ ॥
औष्ट्रिकेभ्यो ज्ञातवार्तः पितुरत्यार्तिवार्तया । नन्दां संबोध्य सस्नेहं प्रतस्थे श्रेणिकस्ततः ॥ १३५ ॥
वयं पांडुरकुड्या गोपा[3]ला राजगृहे पुरे । आह्वानमंत्रप्रतिमान्यक्षराणीति चार्पयत् ॥ १३६ ॥
माऽन्या तातस्य रोगार्तेर्मदर्तिर्भूदिति द्रुतम् । उष्ट्रीं श्रेणिकमारुह्य ययौ राजगृहं पुरम् ॥ १३७ ॥
तं दृष्ट्वा मुदितो राजा हर्षनेत्राश्रुभिः समम् । राज्येऽभ्यषिञ्चद्विमलैः सुवर्णकलशांबुभिः ॥ १३८ ॥
राजापि संस्मरन् पार्श्वजिनं पंचनमस्क्रियाम् । चतुःशरणमापन्नो विपद्य त्रिदिवं ययौ ॥ १३९ ॥
विश्वं विश्वंभराभारं बभार श्रेणिकस्ततः । तेन गर्भवती मुक्ता गर्भं नन्दापि दुर्वहम् ॥ १४० ॥

१ आग्रहणे । २ चरा एव लोचनानि येषां तैः । ३ गा धेनूः पालयन्ति पक्षे गां पृथ्वीं पालयन्तीति तथा ।

तस्या दोहद इत्यासीद्गजारूढा शरीरिणाम् । महाभूत्योपकुर्वाणा भवाम्यभयदा यदि ॥ १४१ ॥
विज्ञपय्याथ राजानं तत्पित्रापूरि दोहदः । पूर्णे काले च सासूत प्राची रविमिवार्भकम् ॥ १४२ ॥
दोहदार्थानुसारेण तस्याथ दिवसे शुभे । चकाराभयकुमार इति मातामहोऽभिधाम् ॥ १४३ ॥
स क्रमाद्ववृधे विद्या निरवद्याः पपाठ च । अष्टवर्षोऽभवद्दक्षो द्वासप्तत्यां कलासु च ॥ १४४ ॥
सवयाः कलहे कोऽपि तं कोपादित्यतर्जयत् । किं त्वं जल्पसि यस्याहो पितापि ज्ञायते न हि ॥१४५॥
ऊचेऽभयकुमारस्तं ननु भद्रः पिता मम । पिता भद्रो भवन्मातुः प्रत्युवाचेति सोऽभयम् ॥ १४६ ॥
नन्दां प्रत्यभयोऽप्यूचे मातः को मे पितेत्यथ । अयं तव पिता भद्रश्रेष्ठी नन्देत्यचीकथत् ॥ १४७ ॥
भद्रस्तव पिता शंस मदीयं पितरं ननु । पुत्रेणेत्युदिता नन्दा निरानन्देदमब्रवीत् ॥ १४८ ॥
देशान्तरादागतेन परिणीतास्मि केनचित् । मम च त्वयि गर्भस्थे तमापुः केचिदौष्ट्रिकाः ॥ १४९ ॥
रहः स किंचिदुक्त्वा तैः सहैव क्वचिदप्यगात् । अद्यापि तं न जानामि कुतस्त्यः कश्चिदप्यहम् ॥१५०॥
स यान् किंचिज्जजल्प त्वामिति पृष्टाभयेन सा । अक्षराण्यर्पितान्येतानीति पत्रमदर्शयत् ॥ १५१ ॥
तद्विभाव्याभयः प्रीतोऽब्रवीन्मम पिता नृपः । पुरे राजगृहे तत्र गच्छामो ननु संप्रति ॥ १५२ ॥
आपृच्छ्य श्रेष्ठिनं भद्रं सामग्रीसंयुतस्ततः । नान्देयो[1] नन्दया सार्धं ययौ राजगृहं पुरम् ॥ १५३ ॥
मातरं बहिरुद्याने विमुच्य सपरिच्छदाम् । तत्र स्वल्पपरीवारः प्रविवेशाभयः पुरे ॥ १५४ ॥
इतश्च मेलितान्यासंस्तदा श्रेणिकभूभुजा । शतानि पंचैकोनानि मंत्रिणां मंत्रसत्रिणाम्[2] ॥ १५५ ॥

१ नन्दापुत्रः । २ मंत्रेषु दक्षाणाम् ।

मंत्रिपञ्चशतीं पूर्णां कर्तुं नरपतिस्ततः । लोके गवेषयामास कंचिदुत्कृष्टपूरुषम् ॥ १५६ ॥
ततश्च तत्परीक्षार्थं शुष्ककूपे निजोर्मिकाम् । प्रचिक्षेप क्षितिपतिर्लोकानित्यादिदेश च ॥ १५७ ॥
आदास्यते करेणैतामूर्मिकां यस्तटस्थितः । तस्य धीकौशलक्रीती[1] मदीया मंत्रिधुर्यता ॥ १५८ ॥
तेऽप्यूचुर्यदशक्यानुष्ठानमस्मादृशामिदम् । ताराः करेण यः कर्षेत्स इमामूर्मिकामपि ॥ १५९ ॥
ततोऽभयकुमारोऽपि संप्राप्तस्तत्र सस्मितम् । ऊचे किं गृह्यते नैषा किमेतदपि दुष्करम् ॥ १६० ॥
तं दृष्ट्वा च जना दध्युः कोऽप्यसावतिशायिधीः । समये मुखरागो हि नृणामाख्याति पौरुषम् ॥ १६१ ॥
ऊचुस्ते तं गृहाणेमामूर्मिकां तत्पणीकृताम् । अर्धराज्यश्रियं पुत्रीं धुर्यतां चैषु मंत्रिषु ॥ १६२ ॥
ततोऽभयकुमारोऽपि मुद्रिकां कूपमध्यगाम् । आर्द्रगोमयपिंडेन निजघानोपरि स्थितः ॥ १६३ ॥
प्रक्षिप्योपरि तत्कालं ज्वलन्तं तृणपूलकम् । सद्यः संशोषयामास गोमयं तन्महामतिः ॥ १६४ ॥
नन्दाया नन्दनः शीघ्रं कारयित्वाथ सारणिम् । वारिणापूरयत् कूपं विस्मयेन च तं जनम् ॥ १६५ ॥
तेजोमयं श्रेणिकसूः करेण तरदाददे । धीमद्भिः सुप्रयुक्तस्य किमुपायस्य दुष्करम् ॥ १६६ ॥
तस्मिन् स्वरूपे चारक्षैर्विज्ञप्ते जातविस्मयः । नृपोऽभयकुमारं द्रागाजुहावात्मसन्निधौ ॥ १६७ ॥
अभयं श्रेणिकः पुत्रप्रतिपत्त्याथ सस्वजे । बन्धुरज्ञायमानोऽपि दृष्टो मोदयते मनः ॥ १६८ ॥
कुतस्त्वमागतोऽसीति पृष्टः श्रेणिकभूभुजा । आगतोऽस्मि पुराद्वेणातटादित्यभयोऽवदत् ॥ १६९ ॥
राजापृच्छद्भद्रमुख सुभद्र इति विश्रुतः । श्रेष्ठी तत्रास्ति तस्यापि नन्दानाम्नी च नन्दना ॥ १७० ॥

---
१ बुद्धिकुशलतया क्रीता ।

अस्त्येव सम्यगित्युक्ते तेन भूयोऽपि भूपतिः । ऊचे नन्दोदरिण्यासीत्[1] किमपत्यमजायत ॥ १७१ ॥
अथाख्यत्कान्तदन्तांशुश्रेणिः[2] श्रेणिकसूरिदम् । देवाभयकुमाराख्यं सा नन्दनमजीजनत् ॥ १७२ ॥
किंरूपः किंगुणः सोऽस्तीत्युदिते सति भूभुजा । ऊचेऽभयः स एवाहं स्वामिन्नस्मीति चिन्त्यताम् ॥१७३॥
परिष्वज्यांकमारोप्य तमाघ्राय च मूर्धनि । स्नेहात्स्नपयितुमिव राजासिञ्चद्दृगंभसा ॥ १७४ ॥
कुशलं वत्स ते मातुरिति पृष्टे महीभुजा । इति विज्ञपयामास बद्धाञ्जलिपुटोऽभयः ॥ १७५ ॥
अनुस्मरन्ती भृंगीव त्वत्पादांभोजसंगमम् । स्वामिन्नायुष्मती मेऽम्बा बाह्योद्यानेऽस्ति संप्रति ॥ १७६ ॥
ततो नन्दां समानेतुममन्दानन्दकन्दलः । न्ययुक्त सर्वसामग्रीमग्रे कृत्वा नृपोऽभयम् ॥ १७७ ॥
ततः स्वयमपि प्राज्योत्कंठोल्लिखितमानसः । नन्दामभिययौ राजा राजहंस इवाब्जिनीम् ॥ १७८ ॥
शिथिलीभूतवलयां कपोललुलितालकाम् । अनञ्जनाक्षीं कबरीधारिणीं मलिनांशुकाम् ॥ १७९ ॥
तनोस्तनिम्नां[3] दधतीं द्वितीयेन्दुकलातुलाम् । ददर्श राजा सानन्दो नन्दामुद्यानवासिनीम् ॥ १८० ॥
नन्दामानंद्य नृपतिर्नीत्वा च स्वं निकेतनम् । पट्टराज्ञीपदेऽकार्षीत् सीतामिव रघूद्वहः ॥ १८१ ॥
ततः स्वसुः सुसेनायाः पुत्रीं मंत्रिषु धुर्यताम् । राज्यस्यार्धं चाभयाय नृपतिः श्रेणिको ददौ ॥ १८२ ॥
भक्तितः पितरि स्वस्य पदातिपरमाणुताम् । मन्वानः साधयामास दुःसाध्यान् भूभुजोऽभयः ॥१८३॥
इतश्च वसुधावध्वा मौलिमाणिक्यसन्निभा । वैशालीति श्रीविशाला[4] नगर्यस्त्यगरीयसी ॥ १८४ ॥
आखंडल इवाखंडशासनः पृथिवीपतिः । चेटीकृतारिभूपाल[5]स्तत्र चेटक इत्यभूत् ॥ १८५ ॥

---

१ गर्भिणी । २ कान्ता मनोहरा दन्तकिरणपङ्क्तिर्यस्य सः । ३ कृशत्वम् । ४ श्रिया लक्ष्म्या विशाला । ५ दासीकृताः शत्रुनृपा येन सः ।

पृथग्राज्ञीभवास्तस्य बभूवुः सप्त कन्यकाः । सप्तानामपि तद्राज्यांगानां सप्तेव देवताः ॥ १८६ ॥
प्रभावती पद्मावती मृगावती शिवापि च । ज्येष्ठा तथैव सुज्येष्ठा चिल्लणा चेति ताः क्रमात् ॥ १८७ ॥
चेटकस्तु श्रावकोऽन्यविवाहनियमं वहन् । ददौ कन्या न कस्मैचिदुदासीन इव स्थितः ॥ १८८ ॥
तन्मातर उदासीनमपि ह्यापृच्छ्य चेटकम् । वराणामनुरूपाणां प्रददुः पंच कन्यकाः ॥ १८९ ॥
प्रभावती वीतभयेश्वरोदयनभूपतेः । पद्मावती तु चंपेशदधिवाहनभूभुजः ॥ १९० ॥
कौशाम्बीशशतानीकनृपस्य तु मृगावती । शिवा तूज्जयिनीशस्य प्रद्योतपृथिवीपतेः ॥ १९१ ॥
कुंडग्रामाधिनाथस्य नन्दिवर्धनभूभुजः । श्रीवीरनाथज्येष्ठस्य ज्येष्ठा दत्ता यथारुचि ॥ १९२ ॥
सुज्येष्ठा चिल्लणा चापि कुमार्यावेव तस्थतुः । रूपश्रियोपमाभूते ते द्वे एव परस्परम् ॥ १९३ ॥
ते दिव्याकारधारिण्यौ दिव्यवस्त्रविभूषणैः । अवियुक्ते सदाभूतां तारे इव पुनर्वसू ॥ १९४ ॥
कलाकलापकुशले श्रुतार्थोपनिषद्विदौ[१] । मूर्ती इव सरस्वत्या रेमाते ते परस्परम् ॥ १९५ ॥
सममानर्चतुर्देवं धर्मं शुश्रुवतुः समम् । चक्रतुः सममन्यच्च ते द्वे एकात्मिके इव ॥ १९६ ॥
अपरेद्युश्च सुज्येष्ठाचिल्लणाभ्यामलंकृतम् । कन्यान्तःपुरमभ्यागादेका स्थविरतापसी ॥ १९७ ॥
सा च व्याख्यच्छौचमूलं धर्मं पापविनाशकम् । उत्फुल्लगल्लम[२]ज्ञानपर्षदीव तयोः पुरः ॥ १९८ ॥
सुज्येष्ठावोचदाः शौचमशुभाश्रवरूपकम् । अशुभश्चाश्रवः पापहेतुः पापच्छिदे कथम् ॥ १९९ ॥

१ शास्त्राणामर्थमुपनिषदं च ब्रह्मविद्यां वित्त इति तथा । २ उत्फुल्लौ प्रफुल्लौ गल्लौ यस्यां क्रियायामिति क्रियाविशेषणम् ।